ॐ

# काश्मीरिकत्रैवर्ण्योपयोगी लौगाक्षि...प्रकरणः

द्विजत्वगार्ह...त्यसंस्कारोत...

...चक-विवाह-उपनयन-

कन्यासंस्कार-नान्दीश्राद्ध-इहकीलिपूज...

नोनरग्रामपाठशालाध्यक्षेन ज्योतिर्वि...

पण्डितकेशवभट्टकेन संस्कृतः शोधितश्चायं

# मेखला पुस्तकः

KRI-15

इदं पुस्तकं

पण्डित विश्वनाथ एंड सन्स

फोटाग्राफर्स प्रोप्राइटर्स इत्यादि,

...मीर प्रताप स्टीम प्रेस श्रीनगर में छपाया गया।

सप्तर्षिवत्सरे ५००१ वैक्रमे १९८१ प्रकाशितः

परोपकाराय भूयात् ॥ मूल्यं २) रूपिकाद्वयम् ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

From Shal Kukroo to Jamme Maigu[illegible]

अथ

# ॥ ऋचकम् ॥

आदौ स्वस्त्ययनम् ।

ॐश्रीगणेशाय नमः ॥ ॐकारो यस्य मूलं क्र[illegible]व-
दजठरं छन्दविस्तीर्णशाखा ऋक्पत्रं सामपुष्पं [illegible]मञ्जु
चिरफलं स्यादऽथर्वा प्रतिष्ठा । [illegible]च्छायासुशीतो स-
जगणमधुपैर्गीयते यस्[illegible] नित्यं [illegible]कः सन्ध्या त्रिक[illegible]
दुरितभयहरः पातु नो वेदवृ[illegible] ॥ १ ॥ [illegible] सुच्छ
स्थिरधर्ममूल[illegible] पुण्यालवालान्वितो धीविद्याकरु[illegible]
क्षमादिविलसद्विस्तीर्णशाखाश्रितः । सन्तोषो[illegible]लपल्ल-
वः शुचियशःपुष्पः सदा सत्फलः सर्वाशापरिपू[illegible]का

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

विजयते श्रीवेदकल्पद्रुमः ॥ २ ॥ मूलाधाराद्भुतवहकलामिश्रितं भूर्भुवः स्वर्ब्रह्मस्थानात्परमगहनात्तत्सवितुर्वरेण्यम् । भर्गो देवः शशिकलमयी धीमहीत्येकरूपं धियो यो नः पिबतममृतं चोदयान्नः परं तत् ॥ ३ ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्[illegible]र्णात्मिकाम् । गायत्रीं वरदाभयाङ्कुशकरां शूलं क[illegible]जं गुणं शङ्खं चक्रमथारविन्दयुगलं हस्तै[illegible] हन्तीं भजे ॥ ४ ॥ आयातु वरदा देवी त्र्यक्षरा ब्रह्मवादिनी । गायत्रि ! छन्दसां मातर्ब्रह्मयोने ! नमोस्तु ते ॥ ३ ॥ [ ॐओजोसीति गायत्रीमावाह्य । देवान[illegible]मार्षम् ॥ ] ओजोऽसि सहोसि बलमासि भ्राजोऽसि देवानां धामनामासि विश्वमासि विश्वायुः सर्वमसि स[illegible]भिभूः ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः [illegible] ॐसत्यं ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ३ ॥ [ स्वस्त्यात्रेयः पांक्त्यन्तमग्नेः पञ्चानामेतस्या गायत्र्यः षडाग्निह-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

स्तिस्रो जगत्योऽनुष्टुभौ बृहती च ॥] स्वस्ति नो मि-
मीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः । स्वस्ति
पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना
॥ १ ॥ स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवन-
स्य यस्पतिः । बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आ-
दित्यासो भवन्तु नः ॥ २ ॥ विश्वे देवा नो अद्या
स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये । देवा अवत्वृभवः
स्वस्तये स्वस्तिनो रुद्रः पात्वंहसः ॥ ३ ॥ स्वस्ति मि-
त्रावरुणा स्वस्ति पथ्ये रेवति । स्वस्ति न इन्द्रश्चाग्निश्च
स्वस्ति नो अदिते ! कृधि ॥ ४ ॥ स्वस्ति पन्थामनु
चरेम सूर्याचन्द्रमसाविव । पुनर्ददता घ्नता जानता स-
ङ्गमेमहि ॥ ५ ॥ स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं
वायसं देवतानाम् । असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो
नावमिवारुहेम ॥ ६ ॥ अंहोमुचमाङ्गिरसं गयं च स्व-
स्त्यात्रेयं मनसा च तार्क्ष्यम् । प्रयतपाणिः शरणं प्र-
पद्ये स्वस्ति सम्बाधेष्वभयं नो अस्तु । [illegible]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

॥ ७ ॥ [इति कल्याणभद्रम् ॥] " ओंअग्निर्वायुश्च सूर्यश्च वरुणः साम एव च । ब्रह्म राज्ञ रथश्चैवमष्टौ भद्राः प्रकीर्तिताः ॥" अग्नये समनमत्पृथिव्यै समनमद्यथाग्निः पृथिव्या समनमदेवं मह्यं भद्राः सन्नतयः संनमन्तु ॥ १ ॥ वायवे समनमदन्तरिक्षाय समनमद्यथा वायुरन्तरिक्षेण समनमदे० ॥ २ ॥ सूर्याय समनमद्दिवे समनमद्यथा सूर्यो दिवा समनमदे० ॥ ३ ॥ वरुणाय समनमदऽद्भ्यः समनमद्यथा वरुणोद्भिः समनमदेव० ॥ ४ ॥ साम्ने समनमदृचे समनमद्यथा सामर्चा समनमदे० ॥ ५ ॥ ब्रह्मणे समनमत्क्षत्राय समनमद्यथा ब्रह्म क्षत्रेण समन० ॥ ६ ॥ राज्ञे समनमत् विशे समनमद्यथा राजा विशा समन० ॥ ७ ॥ रथाय समनमदश्वेभ्यः समनमद्यथा रथोऽश्वैं० ॥ ८ ॥ [इति अग्निभद्रम् ॥] [कनिक्रदत्तृचं प्रदक्षिणिज्ञागतं मध्येऽतिशकर्यष्टिर्वैताभ्यामृषिरध्वरे चाशमानं शकुनं तथाव कुशिकस्तेषीरशिरिन्दितत्वं प्रजापतिमंत्र

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

स्तेपे तस्येन्द्र इव गाधिपुत्रो जज्ञे गाथिनो विश्वामित्रः
स तृतीयं मण्डलमपश्यत् ॥ ] कनिक्रदज्जनुषं प्रब्रुवा-
ण इयर्त्ति वाचमरितेव नावम् । सुमङ्गलश्च शकुने भ-
वासि मात्वा काचिदभिभा विश्व्या विदत् ॥ १ ॥
मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विददिषुमा-
न्वीरो अस्ता । पित्र्यामनु प्रदिशं कनिक्रदत्सुमङ्गलो
भद्रवादी वदेह ॥ २ ॥ अव क्रन्दन्दक्षिणतो गृहाणां
सुमङ्गलो भद्रवादी शकुन्ते । मा नः स्तेन ईशत मा-
घशंसो बृहद्वदेम विदथे सुवीराः ॥ ३ ॥ ओंप्रदक्षि-
णिदऽभि गृणन्ति कारवो वयो वदन्त ऋतुथा शकु-
न्तयः । उभे वाचौ वदति सामगा इव गायत्रं च
त्रैष्टुभं चानु राजति ॥ ४ ॥ उद्गातेव शकुने साम
गायसि ब्रह्मपुत्र इव सवनेषु शंससि । वृषेव वाजी
शिशुमतीरपीत्या सर्वतो नः शकुने । भद्रमा वद वि-
श्वतो नः शकुने पुण्यमा वद ॥ ५ ॥ भद्रं वद द-
क्षिणतो भद्रमुत्तरतो वद । भद्रं पुरस्तान्नो वद भद्र

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

पश्चात्कपिञ्जल ॥ ६ ॥ भद्रं वद पुत्रैर्भद्रं वद गृहेषु
च । भद्रमस्माकं वद भद्रं नो अभयं वद ॥ ७ ॥ भद्र-
मधस्तान्नो वद भद्रमुपरिष्टान्नो वद । भद्रं भद्रन्न आ-
वद भद्रन्नः सर्वतो वद ॥ ८ ॥ असपत्नं पुरस्तान्नः
शिवं दक्षिणतस्कृधि । अभयं सततं पश्चाद्भद्रमुत्तरतो
गृहे ॥ ९ ॥ योऽवनानि महयसि जिग्युषामिव दु-
न्दुभिः । शकुन्तक प्रदक्षिणं शतपत्राऽभि नो वद
॥ १० ॥ आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासी-
नः सुमतिं चिकिद्धि नः । यदुत्पतन्वदसि कर्करिर्य-
था बृहद्वदेम विदथे सुवीराः ॥ ११ ॥ [इति क-
निक्रदत्सूक्तं नाम, शकुनिभद्रम् ॥] "ऐन्द्रवायव्ये द्या-
वापृथिव्यावन्त्यस्तृचो हविर्धाने वा तस्य तृतीयः पादो
वाग्नेयोऽग्वितममानुष्टुभं बृहती च ॥" इन्द्रश्च मृळया-
ति नो न नः पश्चादघं नशत् । भद्रम्भवाति नः पुरः
॥ १ ॥ इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

शृणुता म इमं हवम् । एदं बर्हिर्निषीदत ॥ ३ ॥
तीव्रो वो मधुमाँ अयं शुनहोत्रेषु मत्सरः । एतं पि-
बत काम्यम् ॥ ४ ॥ इन्द्रज्येष्ठा मरुद्गणा देवासः पू-
षरातयः । विश्वे मम श्रुता हवम् ॥ ५ ॥ अम्बितमे
नदीतमे देवितमे सरस्वति । अप्रशस्ता इव स्मसि प्र-
शस्तिमम्ब ! नस्कृधि ॥ ६ ॥ त्वे विश्वा सरस्वति श्रि-
तायूंषि देव्याम् शुनहोत्रेषु मत्स्व प्रजां देवि दिदिड्-
ढिनः ॥ ७ ॥ इमा ब्रह्म सरस्वति जुषस्व वाजिनीव-
ति । या ते मन्म गृत्समदा ऋतावरि प्रियान्देवेषु
जुह्वति ॥ ८ ॥ प्रेतां यज्ञस्य शम्भुवां युवामिदा वृ-
णीमहे । अग्निं च हव्यवाहनम् ॥ ९ ॥ द्यावा नः
पृथिवी इमं सिध्रमद्य दिवस्पृशम् । यज्ञं देवेषु यच्छ-
ताम् ॥ १० ॥ आ वामुपस्थमद्रुहा देवाः सीदन्तु य-
ज्ञियाः । इहाद्य सोमपीतये ॥ ११ ॥ [इतीन्द्रभद्रम् ।]
आ नो दश वैश्वदेवयन्तु द्वि त्रिष्टुबन्तं षष्ठी विराट्-
स्थाना ॥ आ नो भद्राः क्रतवो यन्तु विश्वतो-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ब्धासो अपरीतास उद्भिदः । देवा नो यथा सदमिद्वृ-
धे असन्नप्रायुवो रक्षितारो दिवे दिवे ॥ १ ॥ देवा-
नां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो निव-
र्त्तताम् । देवानां सख्यमुप सेदिमा वयं देवा न आ-
युः प्रतिरन्तु जीवसे ॥ २ ॥ तान्पूर्वया निविदा हू-
महे वयं भगं मित्रमदितिं दक्षमस्रिधम् । अर्यमणं व-
रुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् । ३ ।
तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पि-
ता द्यौः । तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृ-
णुतं धिष्ण्या युवम् ॥ ४ ॥ तमीशानं जगतस्तस्थुष-
स्पतिं धियञ्जिन्वमवसे हूमहे वयम् । पूषा नो यथा
वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ५ ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधा-
तु ॥ ६ ॥ पृषदश्वा मरुतः पृश्निमातरः शुभं यावा-
नो विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

विश्वे नो देवा अवसा गमन्निह ॥ ७ ॥ भद्रं कर्णे-
भिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरै-
रङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ ८ ॥
शतमिन्नु शरदो अन्तिदेवा यत्रा नश्चक्रा जरसं तनू-
नाम् । पुत्रासो यत्र पितरो भवन्ति मानो मध्या री-
रिषतायुर्गन्तोः ॥ ९ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदि-
तिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः प-
ञ्चजना अदितिर्जातमदितिर्जनित्वम् ॥ १० ॥ [इत्या-
नो भद्रम्] ॥ भद्रो नो अग्निः सुहवो विभावसुर्भद्र इन्द्रः
पुरुहूतः पुरुष्टुतः । भद्रः सूर्य उरुचक्षा उरुव्यचा भद्र-
श्चन्द्रमाः समिथेषु जागृविः ॥ १ ॥ भद्रः प्रजा अ-
जनयन्नः प्रजापतिर्भद्रः सोमः पावमानो वृषा हरिः ।
भद्रस्त्वष्टा विदधद्रूपाण्यद्भुतो भद्रो नो धाता वरिवस्यतु
प्रजाः ॥ २ ॥ भद्रस्तार्क्ष्यः सुप्रजस्त्वाय नो महानरि-
ष्टनेमिः पृतना युधा जयन् । भद्रो वायुर्मातरिश्वा
[illegible] ॥ ३ ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

भद्रो मित्रो वरुणो रुद्र इद्वृधा भद्रोऽहिर्बुध्न्यो भुवन-
स्य रक्षिता । भद्रो नो वास्तोष्पतिरस्त्वमीवहा भद्रः
क्षेत्रस्य पतिर्विचर्षणिः । भद्रो विभुर्विश्वकर्मा बृहस्पतिर्भ-
द्रो द्विषस्तपनो ब्रह्मणस्पतिः ॥ ४ ॥ भद्रः सुपर्णो
अरुणो मरुत्सखा भद्रो नो वातो अभिवातु भेषजी
॥ ५ ॥ [व० १] भद्रो दधिक्रा वृषभः कनिक्रदद्भ-
द्रः पर्जन्यो बहुधा विराजति । भद्रा सरस्वां उत नः
सरस्वती भद्रो वशी भद्र इन्द्र पुरूरवः ॥ ६ ॥ भ-
द्रो नः पूषाः सविता यमो भगो भद्रोऽग्रज एकपादऽ-
र्यमा मनुः । भद्रो विष्णुरुरुगायो वृषा हरिर्भद्रो वि-
वस्वां अभिवातु नस्त्मना ॥ ७ ॥ भद्रा गायत्री ककु-
बुष्णिहा विराड्भद्रानुष्टुप् बृहती पङ्क्तिरस्तु नः । भद्रा
नस्त्रिष्टुब्जगती पुरुप्रिया भद्रातिच्छन्दा बहुधा विभूवरी
॥ भद्रा नो राकानुमतिः कुहूः सुहृद्भद्रा सिनीवाल्य-
दितिर्मही ध्रुवा । भद्रानो द्यौरन्तरिक्षं मयस्करं भद्रोशो
[illegible]तयाय रस्तु नः ॥ भद्रो नः प्राणः सुमनाः सु[illegible]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

गसद्रुद्रो अपानः सतनोः सहत्मना । भद्रं चक्षुर्भद्रमि-
च्छ्रोत्रमस्तु नो भद्रं न आयुः शरदो असच्छताम् ॥
(व०) भद्रेन्द्राग्नी नो भवतामृतावृधा भद्रा नो मित्रा
वरुणा धृतव्रता । भद्राश्विना नो भवतां नवेदसा भद्रा
द्यावापृथिवी विश्वशम्भुवा ॥ भद्रा न इन्द्रावरुणा रि-
शादसा भद्रा न इन्द्रा भवतां बृहस्पती । भद्रेन्द्रावि-
ष्णू सवनेषुयावृधा भद्रेन्द्रासोमा युधि दस्युहन्तमा ॥
भद्राग्नाविष्णू विदथस्य प्रसाधना भद्रा नोऽग्नीन्द्रा वृ-
षभा दिवस्पती । भद्रा नो अग्नीवरुणा प्रचेतसा भ-
द्राग्नीषोमा भवता नवेदसा ॥ भद्रा सूर्याचन्द्रमसा क-
विक्रतू भद्रा सोमा भवतां पूषणा नः । भद्रेन्द्रवायू पृ-
तनास्वसासही भद्रा सूर्याग्नी अजिता धनञ्जया ॥ भ-
द्रा नः सन्तु वसवो वसुप्रजा भद्रा रुद्रावृत्रहणा पुर-
न्धरा । भद्रा आदित्याः सुपसः सुनीतयो भद्रा राजा-
नो मरुतो विरप्शिनः ॥ (व०) भद्रा न ऊमा सुह-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ध्या अभिभव: सूरचक्षसो भद्रा न: सन्त्वृभवो रत्नधा-
तमाः ॥ भद्राः सर्वे वाजिनो वाजसातयो भद्रा ऋ-
षयः पितरो गभस्तयः । भद्रा भृगवोऽङ्गिरसः सुदा-
नवो भद्रा गन्धर्वाप्सरसः सुदंशसः ॥ भद्रा आपः
शुंचयो विश्वभृत्तमा भद्राः शिवा यक्ष्मनुदो न ओषधीः ।
भद्रा गावः सुरभयो वयोवृधो भद्रा योषा उशतीर्देव-
पत्नयः ॥ भद्राणि सामानि सदा भवन्तु नो भद्रा अ-
थर्वाण ऋचो यजूंषि नः । भद्रा नक्षत्राणि शिवानि
विश्वा भद्रा आशा अहुताः सन्तु नो हृदि ॥ संवत्सरा
न ऋतवो मयोभुवो यो वा आयुवाः सुसराण्युत क्ष-
पाः । मुहूर्ताः काष्टाः प्रदिशो दिशश्च सदा भद्रा स-
न्तु द्विपदे चतुष्पदे ॥ भद्रं पश्येम प्रचरेम भद्रं भद्रं
वदेम शृणुयाम भद्रम् । तन्नो मित्रो वरुणो मा मह-
न्तामदितिः सिन्धुः पृथिवी उत द्यौः (व० ॥ इत्यशी-
तिभद्रं । स्वस्ययनं समाप्तम् ॥) अथ कलशस्थापनम् ॥
CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri
( कलशं पुनयत् ) ॥ ओमेधी ढु देवानामकेन्द्राणी व-

रूणान्यग्नायीनां द्यावापृथिव्यौ पार्थिवी षड्वैष्णव्योऽन्तो देवा दैवा वा ॥ ) अभि नो देवीरवसा महः शर्मणा नृपत्नीः । अच्छिन्नपत्रा सचन्ताम् ॥ इहेन्द्राणीमुपह्वये वरुणानीं स्वस्तये । आग्नायीं सोमपीतये ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः । गन्धर्वस्य ध्रुवे पदे ॥ स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥ (व० १) अतो देवा अवन्तु नो यतो विष्णुर्वि चक्रमे । पृथिव्याः सप्तधामभिः ॥ इदं विष्णुर्वि चक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ॥ त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पृशे । इन्द्रस्य युज्यः सखा ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ (व० २

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

इति विष्णुभद्रम् ) ॐगायत्र्यै नमः ॐभुर्भुवः० ३ ॥ (क्षे-
त्रपालयोरक्षतम् ॥ ) अश्वमेधे घोराणामार्षम् ) द्रष्ट्रे नम
उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे
नमोऽनुक्शात्रे नमः शृण्वते नम उपशृण्वते नमः
सते नमोऽसते नमो जाताय नमो जनिष्यमाणाय न-
मो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय
नमो मनसे नमो वाचे नमो ब्रह्मणे नमः शान्ताय
नमस्तपसे नमः ॥ भूतं भव्यं भविष्यद्वषट् स्वाहा न-
म ऋक्सामयजुर्वषट् स्वाहा नमो गायत्री त्रिष्टुब्जगती
वषट् स्वाहा नमः पृथिव्यन्तरिक्षं द्यौर्वषट् स्वाहा न-
मोऽन्नं कृषिर्वृष्टिर्वषट् स्वाहा नमः पिता पुत्रः पौत्रो व-
षट् स्वाहा नमः प्राणो व्यानोऽपानो वषट् स्वाहा
नमो भूर्भुवःस्वर्वषट् स्वाहा नमः ॥ (कलशे पुष्पम् )
यो विश्वचक्षुरुत विश्वतो मुखो विश्वतो हस्त उत वि-
श्वतस्पात् । सम्बाहुभ्यां नमते संपतत्रैर्द्यावापृथिवी ज-
नयन्देव एकः ॥ ओँवो ब्रह्मजज्ञानं ब्रह्मयज्ञं

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

जायतामस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिर्जिष्णूरथेष्ठाः पुरन्धिर्योषा सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ [इषे त्वोर्जे त्वेति ब्रह्मणः सर्ववेदो ब्रह्मणः यजुः] इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे, आप्यायध्वमघ्न्या देवभागं प्रजावतीरनमीवा अयक्ष्मा मा वः स्तेन ईशत माघशंसः, परि वो रुद्रस्य हेतिर्वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि यजमानस्य पशुपा असि ॥, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे, गोषदसि प्रत्युष्टं रक्षः प्रत्युष्टारातिः प्रेयमगाद्धिषणा, बर्हिरच्छ मनुना कृता स्वधया वितष्टा उर्वन्तरिक्षं वीहीन्द्रस्य, परिषूतमसि साधो मोपरि

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

शतवल्शं विरोह सहस्रवल्शा वि वयं रुहेम, आदि-
त्या रास्नासीन्द्राण्याः सन्नहनं पूषा ते ग्रन्थिं ग्रथ्नातु,
स ते मा स्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पते-
स्त्वा मूर्ध्ना हरामि, देवङ्गममसि तदाहरन्ति कवयः
पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे ॥ वसोः पवित्रमसि
शतधारं वसूनां पवित्रमसि सहस्रधारमऽयक्ष्मा वः प्र-
जया संसृजामि रायस्पोषेण बहुला भवन्तीः, मधुम-
द्घृतवत्पिन्वमाना जीवा जीवन्तीरुप वः सदेम, मात-
रिश्वानो घर्मोऽसि द्यौरसि पृथिव्यसि विश्वधायाः प-
रेण धाम्ना हुतासि मा ह्वाः सा विश्वायुः सा विश्व-
व्यचाः सा विश्वधायाः, हुतस्तोको हुतो द्रप्सोऽग्न-
ये बृहते नाकाय स्वाहा, द्यावापृथिवीभ्यां सम्पृच्य-
ध्वमृतावरी ऊर्मिणा मधुमत्तमा मान्द्रा धानस्य सात-
यः, इन्द्रस्य त्वा भागं सोमेनातनच्म्यदस्तमसि वि-
ष्णवे विष्णो हव्यं रक्षस्वापो जागृत ॥ महित्रीणामवो-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ऽस्तु, द्युक्षं मित्रस्यार्यम्णः, दुराधर्षं वरुणस्य, नहि

तेषाममा चन, नाध्वसु वारणेषु, ईश रिपुरघशंसः ; यस्मै पुत्रासो अदितेः, प्रजीवसे मर्त्याय, ज्योतिर्यच्छ-न्त्यजस्रम् , सोमानं स्वरणं, कृणुहि ब्रह्मणस्पतिः, क-क्षीवन्तं य औशिजः, यो रेवान्यो अमीमहा वसुवित्पु-ष्टिवर्धन,ः स नः सिषक्तु यस्तुरः, मा नः शंसो अ-ररुषो धूर्तिः प्रणङ्मर्त्यस्य । रक्षा णो ब्रह्मणस्पते ॥ (प्रणीतपात्रे पुष्पत्रयम्)। सं व्रः सृजामि हृदयं संसृष्टं मनो अस्तु वः । सं सृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः ॥ सं यात्रः प्रियास्तन्वः संप्रिया हृदयानि वः । आत्मा वो अस्तु सं प्रियः सं प्रिया-स्तन्वो मम ॥ (तद्विष्टरेण कलशे जीवाधानम्) अग्ने-रायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा आयुर्धेहि ॥ इन्द्रस्य प्राणः स ते प्राणं ददातु यस्य प्राणस्तस्मै ते स्वाहा ॥ पितॄणां प्राणस्ते ते प्राणान्द-दतु येषां प्राणस्तेभ्यो वः स्वाहा ॥ मरुतां प्राणस्ते ते प्रा-णान्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ॥ विश्वेषां देवानां

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

प्राणस्ते ते प्राणान्ददतु येषां प्राणस्तेभ्यो वः स्वाहा ।। प्रजापते परमेष्ठिनः प्राणस्तौ ते प्राणान्दत्तां ययोः प्राणस्ताभ्यां वां स्वाहा ।। यदऽसर्पस्तत्सार्पिरभवो यन्नवमैस्तन्नवनीतमभवो यदध्रियथास्तद्घृतमभवः ।। घृतस्य धारामम्रृतस्य पन्थामिन्द्रेण दत्तं प्रयतं मरुद्भिः, तत्त्वा विष्णुरन्वपश्यत्तत्तेळा गव्यैरयत् ।। पावमानेन त्वा स्तोमेन गायत्र्या वर्तन्या पाँशोर्वीर्येणोद्धराम्यसौ ।। बृहता त्वा रथन्तरेण त्रिष्टुभा वर्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसौ अग्नेस्त्वा मात्रया जगत्या वर्तन्या देवस्त्वा सवितोन्नयतु जीवातवे जीवनस्यायासौ ।। देवा आयुष्मन्तस्तेऽमृतेनाऽयुष्मन्तस्तेषामयमायुषाऽयुष्मानस्त्वसौ ।। ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तस्यायमा० ।। अग्निरायुष्मान्स वनस्पतिभिरायुष्माँस्तस्यायमा० ।। यज्ञ आयुष्मान्स दक्षिणाभिरायुष्माँस्तस्याय० ।। सोम आयुष्मान्स ओषधीभिरायुष्माँस्तस्या० ।। ओषधय आयुष्मतीस्ता अद्भिरयुष्मतीस्तासामय० ।। इममग्ने आयुषे वर्चसे कृधि तिग्ममो-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

जो वरुण सं शिशाधि । मातेवास्मा अदिते शर्मय-
च्छ विश्वेदेवा जरदष्टिर्यथा सत ॥ अश्विनोः प्राण-
स्तौ ते प्रणं दत्तां तेन जीव, मित्रावरुणयोः प्राण-
स्तौ ते प्राणं दत्तां तेन जीव, बृहस्पतेः प्राणः स ते
प्राणं दत्तात्तेन जीव ॥ (मण्डपदिक्षु रक्षोघ्नमंत्रैस्ति-
लार्घक्षेपणं ।) [पूर्वे ॥] ये देवाः पुरःसदोऽग्निनेत्रा
रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा ॥
[दक्षिणे] ये देवा दक्षिणात्सदो यमनेत्रा रक्षोह० ॥
[पश्चिमे] ये देवाः पश्चात्सदो मरुन्नेत्रा र० ॥ [उत्तरे]
ये देवा उत्तरात्सदो मित्रावरुणनेत्रा रक्षो० ॥ (ऊर्ध्वे)
ये देवा उपरिषदः सोमनेत्रा अवस्वदन्तो रक्षोह० ॥
[आग्नेये] इदमहं रक्षोभिः समूहाम्यग्ने सन्दह रक्षः
सन्दग्धं रक्षोग्नये पुरःसदे रक्षोघ्ने स्वाहा ॥ (नैर्ऋते)
यमाय दक्षिणात्सदे रक्षोघ्ने स्वाहा ॥ (वायवे) मरुद्भ्यः
पश्चात्सद्भ्यो रक्षोहभ्यः स्वाहा ॥ [ईशाने] मित्रावरु-
णाभ्यामुत्तरात्सद्भ्यां रक्षोहभ्यां स्वाहा ॥ [अधः]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सोमायोपरिषदे वस्वदते रक्षोघ्ने स्वाहा ॥ (द्रव्यशुद्ध्यर्थं प्रणीतपात्रजलालोडनम्) रथः पञ्चवाही दक्षिणा ॥ [ तद्विष्टरेण जलेशुद्धिः ] अपो हि ष्ठा मयो भुवस्ता न ऊर्जे दधातन, महे रणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयते ह नः । उशतीरिव मातरः ॥ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ [अर्घे] आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे (पुष्पे) पुष्पवतीः प्रसुमतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः [गन्धे] गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् [दर्भे] कर्मणे वां वानस्पत्यमसि-प्रत्युष्टं रक्षः प्रत्युष्टारातिः उर्वन्तरिक्षं वीहि (धूपे) धूरसि धूर्व धूर्वन्तं योऽस्मान्धूर्वति तं धूर्वय वयं धूर्वामस्तं च धूर्व । देवानामसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् । विष्णोः क्रमोऽसि अहु-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तमासि हविर्धानं दंहस्व मा ह्वान्मित्रस्य त्वा चक्षुषा प्रेक्ष उरु त्वा वाताय । वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वत्, रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वत्, आदित्यास्त्वा धूपयन्तु जागतेन छन्दसाङ्गिरस्वत्, विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत् । इन्द्रस्त्वा धूपयतु, वरुस्त्वा धूपयतु, विष्णुस्त्वा धूपयतु (सूर्ये) उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ! देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् [दीपे] तेजोऽसि शुक्रमसि ज्योतिरसि धामासि प्रियं देवानामनाधृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि यज्ञेभ्यस्त्वायज्ञेभ्योगृह्णामि (स्वललाटे तिलकं) अध्वर्योऽयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय । विश्वस्मै भूताय ध्रुवो अस्तु देवाः स पिन्वस्व घृतवद्देव यज्ञ (अर्धपुष्पौ) इहैवैधि माऽपच्योष्टा पर्वता इवाविचाचलित् । इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमुदाराय [स्वासने दर्भद्वयम्] इममिन्द्रो अदीधरद्ध्रुवं ध्रु-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

वेण हविषा हविः । तस्मै सोमो अधि ब्रुवत्तस्मा उ ब्रह्मणस्पतिः [भूमौ आपनम्] ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे । ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि [गन्धार्घपुष्पाणि] मही द्यौ पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः (आकाशे गन्धादि) बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि । प्रया भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥ (वायवे महागणपतये गन्धादि) निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किञ्चनारे महामर्कमघवञ्चित्रमर्च (नैर्ऋते कुमाराय) कुमारं माता युवतिः समुब्दं गुहा बिभर्ति न ददाति पित्रे । अनीकमस्य न मिमज्जनासः पुरा पश्यन्ति निहितमरुतौ (ईशान्ये श्रियै) अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् (मध्ये सरस्वत्यै) इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः । पारावतघ्नीमवसे

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः मध्ये लक्ष्म्यै च-कांस्यस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् [अग्नि विश्वकर्मणे] विश्वकर्मा विश्वदेवो विश्वजिद्विश्व दर्शितः । ते त्वा घृतस्य धारया श्रैष्ठ्याय समसूषत (अष्टदलस्थकुम्भे) ब्रह्मा देवानां पदवीः कवीनामृषि-र्विप्राणां महिषो मृगाणाम् । श्येनो गृध्राणां स्वधि-तिर्वनानां सोमः पवित्रमत्येति रेभन् ॥ प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । य-स्योरुषु त्रिषु विक्रमणेष्वऽधिक्षियन्ति भुवनानि विश्वा ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पति-षु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय न-मो अस्तु देवाः ॥ अग्निमीळे पुरोहितं यज्ञस्य देवमृ-त्विजम्, होतारं रत्नधातमम् । इषे त्वोर्जे त्वा वाय-वः स्थो पायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठ-तमाय कर्मणे ॥ अग्न आ याहि वीतये गृणानो ह-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

व्यदातये । निहोता सत्सि बर्हिषि ॥ शन्नो देवीरभी-
ष्टये आपो भवन्तु पीतये शंय्योरभि स्रवन्तु नः ॥
अहं पितॄन् सु विदत्रां अवित्सि नपातं च विक्रमणं
च विष्णोः । बर्हिषदो ये स्वधया सुतस्य भजन्त
पित्वस्त इहागमिष्ठाः ॥ वषट् ते विष्णवास आ कृ-
णोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा
सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥
ऋतपतये नारायणायनमः । दुर्गायै त्र्यम्बकाय वरुणाय
यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः ( स्वेष्ट-
देवप्रधानानि । ) तद्विष्णोः परमं० । वासुदेवाय इत्यादि
विष्णुपञ्चायतनदेवताभ्योनमः । यत इन्द्र भयामहे० अभ-
यङ्करीदेव्यै नमः ॥ ( पूर्वादितो दिक्पालानां गन्धादि । )
इन्द्रापर्वता बृहता रथेन वामीरिष आवहतं सुवीराः ।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ताम्
अग्निः सप्तिं वाजम्भरं ददात्यग्निर्वीरं श्रुत्यं कर्मनिष्ठम् ।
अग्नी रोदसी विचरत्समञ्जन्नग्निर्नारीं वीरकुक्षिं पुरन्धिम् ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यामोदधार पृथिवीं यमो द्यामुत सूर्यम् । यमाय सर्वमित्तस्थे यत्प्राणाद्वायुरक्षितम् ॥ यं ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचर्त्यम् । तन्ते विष्याम्यायुषो नु मध्येथा विषितः पित्तमऽद्धि प्रमुक्तः ॥ उदुत्तमं वरुण पाशमस्मदऽवाधमं वि मध्यमं श्रथाय । अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ वायवायाहि दर्शतेमे सोमा अरंकृता । तेषां पाहि श्रुधी हवम् ॥ सोमो धेनुं सोमो अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददाति । साधन्यं वितथ्यं सभेयं पितृश्रवणं यो ददाश तस्मै ॥ राजाधिराजाय प्रसह्य साधने नमो वयं वैश्रवणाय कुर्महे । स मे कामान्कामकामाय मह्यं कामेश्वरो वैश्रवणो ददातु कुवेराय वैश्रवणाय महाराजाय वै नमो नमः ॥ ईशानं त्वा शुश्रुमा वयं धनानां धनपते गोमदग्ने अश्ववद्भूरिपुष्टं हिरण्यवदन्नवद्धेहि मह्यम् ॥ दुहान्ते द्यौः पृथिवी पयो जगरस्त्वा

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

[illegible]

आत्मा ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु । यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः ॥ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः । सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ वषट्ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पातु स्वस्तिभिः सदाः नः ॥ (कलशे) नमो अस्तु सर्पेभ्यो ये के च पृथिव्यामधि । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ येषु वा यातुधाना ये वा वनस्पतीरनु । येऽवटेषु शेरते तेभ्यः० ॥ ये वादो रोचने दिवो ये वा सूर्यस्य रश्मिषु । येऽप्सु सदांसि चक्रिरे तेभ्यः० ॥ धन्वना गा धन्वनाऽजिं जयेम धन्वना तीव्राः समदो जयेम । धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥ (मध्ये चक्रचित्रस्था

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

द्वादर्शः) अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् ।

अतूर्त श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन् ॥ (अन्तराग्नेय्यां चक्रस्थाद्वोटयोः) एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम् । स नः शर्म त्रिवरूथं वियं सत्पातं नो द्यावापृथिवी उपस्थे ॥ या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु । तेभिर्नो विश्वैः सुमना अहेळन्राजन्सोम प्रति हव्या गृभाय ॥ (दक्षिणे चतुष्कोणस्थयोः) तं युवां देवावश्विनौ कुमारं साहदेव्यम्, दीर्घायुषं कृणोतन ॥ अग्निमूर्धा दिवः ककुत्पतिः पृथिव्या अयम्, अपां रेतांसि जिन्वति ॥ [ईशाने त्रिकोणस्थयोः] वषट्ते विष्णव आस आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ बोधास्तु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम्, इमा ब्रह्म साधमा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

दे जुषस्व ॥ (उत्तरे त्रिकोणस्थयोः) त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवं शूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ॥ बृहस्पते अति यदर्यो अर्हद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं देहि चित्रम् ॥ (पूर्वे चतुष्कोणस्थयोः) सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमने । सरस्वतीं सुकृतो आह्वयन्ते सरस्वती दाशुषे वार्यं धात् ॥ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रम् । ऋतेन सत्यमिन्द्रियं विपानं शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु ॥ [पश्चिमे जालस्थयोः] प्रजापते न हि त्वदन्य एता विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥ शन्नो देवीरभीष्टये आपो भवन्तु पीतये, शँ य्योरभि स्रवन्तु नः ॥ (नैर्ऋते यवाकारस्थयोः) गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्म-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

णस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ कया नश्चित्र आभुवदूती सदा वृधः सखा, कया शचिष्ठया वृता ॥ आ वो राजानमध्वरस्य रुद्रं होतारं देवयजं रोदस्योः । अग्निं पुरा तनयित्नुरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे, समुषद्भिरजायथाः ॥ [उत्तरे पत्निस्थयोः] को अद्य युङ्क्ते धुरि गा ऋतस्य शिमिवतो भामिनो दुर्हृणायून् । आसन्निषून्हृत्स्वसो मयो भून्य एषां भृत्यामृणवत्स जीवात् ॥ ध्रुवाद्यौर्ध्रुवा पृथिवी० (दक्षिणे कुम्भस्थयोः) आदित्यं गर्भं पयसा समङ्ग्धि सहस्रस्य प्रतिमां विश्वरूपम् । परिवृङ्ग्धि हरसा माभिसंस्थाः शतायुषं कृणुहि चीयमानः ॥ अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः । उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥ [कलशे] अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन्, सखा सुशेव एधि नः । वास्तोष्पते प्रति जानीह्य-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

स्मान्स्वावेशो अनमीवो भवा नः । यत्त्वेमहि प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥ वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व ॥ वास्तोष्पते शग्मया शं सदा ते सक्षीमहि रण्वया गातुमत्या । पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः ॥ (क्षेत्रपालयोः) क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्वा स नो मृळाती दृशे । क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व । मधुश्च्युतं घृतमिव सु पूतमृतस्य नः पतयो मृळयन्तु ॥ मधुमतीरोषधीर्द्याव आपो मधुमान्नो भवन्त्वन्तरिक्षम् । क्षेत्रस्य पतिर्मधुमान्नो अस्त्वरिष्यन्तो अन्वेनं चरेम ॥ (कलशे सर्वदेवस्थापनम्) भूतो भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूव । तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम् ॥ उर्वीरोधसी दरिवः

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

कृणोतु चेत्रस्य पत्नीरधिरोचतं नः । तौ मे द्यावापृथिवी नाथितो जोहवीमि तेनो मुश्चतमंसः । यो ह वै देवान्साध्यान्वेद सिध्यत्यस्मादेमिमा। वलोकाः । देवाः साध्याः सिद्धं ह्यस्यै सिद्धमस्मै सिद्धममुष्यै य एवं वेद सिध्यत्यस्मै ॥ यो विश्वचक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् । संबाहुभ्यां नमते संयजत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ यस्य व्रतमुप तिष्ठन्त आपो यस्य व्रते पशवो यन्ति सर्वे । यस्य व्रते पुष्टिपतिर्निविष्टस्तं सरस्वन्तमवसे जोहवीमि ॥ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ दिव्यं सुपर्णं वायसं बृहन्तमपां गर्भं दर्शतमोषधीनाम् । अभीपतो वृष्टिभिस्तर्पयन्तं सरस्वन्तमवसे जोहवीमि ॥ सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने । सरस्वतीं सुकृतो आह्वयन्ते सरस्वतीं दाशुषे वार्यं धात ॥ सरस्वत्यामे

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नो नेपि वस्योमा पस्फरी पयसः मा न आधक् ।
जुषस्व नः सख्या वेश्या च मा त्वत्क्षत्राण्यरणानि
गन्म ॥ पावका नः सरस्वती वार्जाभिर्वाजिनी वती,
यज्ञं वष्टु धिया वसुः ॥ चोदयत्री सूनृतानां चेतन्ती
सुमतीनाम्, यज्ञं दधे सरस्वती ॥ महो अर्णः सरस्व-
ती प्रचेतयति केतुना, धियो विश्वा विराजति ॥ जात-
वेदसे सुनवाम सोममराति यतो निदहाति वेदः
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरिता-
त्यग्निः ॥ त्र्यम्बकं यजामहे सुगन्धिं रयिपोषणम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ यत इ-
न्द्र भयावहे ततो नो अभयं कृधि । मघवञ्छग्धि तव
तन्न ऊतिभिर्विद्विषो विमृधो जहि ॥ ये देवा दिव्ये-
कादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुषदो म-
हिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥ स
सुष्टुभा स ऋक्वता गणेन बलं रुरोज फलिगं रवेण ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत् ॥

एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः । बृहस्पते सुप्रजा वीरयन्तो वयं स्याम पतयो रयीणाम् ॥ ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सदस्थे ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु देवाः ॥ रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा सरिषः पातु नक्तम् ॥ प्रत्यग्ने हरसा हरः शृणीहि विश्वतः प्रति । यातुधानस्य रक्षसो बलं वीरुज वीर्यम् ॥ अन्विदनुमते त्वमन्यासै शं च नस्कृधि । इषं तोकाय नो दधत्प्राण आयूंषि तारिषः ॥ यत्ते नाम सुहवं सु प्रणीतेऽनुमते सदा नु । तेन त्वं सुमतिर्देव्यस्मे इषं पिन्व विश्ववारां सुवीराम् ॥ राकामहं सुहवां सुष्टुतीं हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याऽच्छिद्यमानया दधातु वीरं शतदायमुक्थम् ॥ यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अथ सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ सि-
नीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्वह-
व्यमाहुतं प्रजान्देवि दिदिड्ढि नः ॥ या सुबाहुः स्व-
ङ्गुरिः सुषूमा बाहुसूवरी । तस्यै विश्पत्न्यै हविः सि-
नीवाल्यै जुहोतन ॥ या कुहूर्या सिनीवाली या राका
या सरस्वती । इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥
इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् । नह्यस्या अ-
परं च न जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥
नाहमिन्द्राणी रारण सख्युर्वृषाकपेर्ऋते । यस्येदमप्यं
हविः प्रियं देवेषु गच्छति, विश्वस्मादिन्द्र उत्तरः ॥
कुहूमहं सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जुहवीमि ।
या नो ददाति श्रवणं पितृणां तस्यै ते देवि हविषा
विधेम ॥ कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य
हविषः शृणोतु । स्वसा देवानां महयन्त्यस्मे रायस्पो-
षं चिकितुषे दधातु ॥ धाता दधातु नो रयिमीशानो
जगतस्पतिः । स नः पूर्णेन वावनत् ॥ प्रजापतीरम-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यतु प्रजा इह धाता दधातु सुमनस्यमानः । संवत्सर ऋतुभिश्चाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु ॥ (उपहोमदेवाः देवासुराणाम् ।) तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः । इन्द्रेण युजः तमसः परिवृतं बृहस्पते निरपामौब्जो अर्णवम् ॥ बृहस्पते अति यदर्यो अर्हद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसर्तप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ बृहस्पतिः समजयद्वसूनि महोव्रजान्गोमतो देव एषः । अपः सिषासन्स्वरप्रतीतो बृहस्पतिर्हन्त्यमित्रमर्कैः ॥ यमो दाधार पृथिवीं यमो द्यामुत सूर्यम् । यमाय सर्वमित्तस्थे यत्प्राणद्वायुरक्षितम् ॥ यथा पञ्च यथा षड्यथा पञ्चदशर्षयः । यमं यो विद्यात्स ब्रूयाद्यथैकर्षिर्विजानते ॥ त्रिकद्रुकेभिः पतति षडुर्वीरेकमिद्बृहत् । गायत्री त्रिष्टुप्छन्दांसि सर्वास्ता यम आहिता ॥ मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेमते । यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

प्रणीतिषु ॥ अश्याम ते सुमतिं देवयज्यया चयद्वीर-
स्य तव रुद्र मीढः । सुम्नायन्नऽद्विषो अस्माकमा
चरारिष्टवीरा जुहवाम ते हविः ॥ त्वेषं वयं रुद्रं य-
ज्ञसाधनमर्कं कविमवसे निह्वयामहे । आरे अस्मद्दैव्यं
हेळो अस्यतु सुमतिमिद्वयमस्या वृणीमहे ॥ अव ते
हेळो वरुण नमोभिरवयज्ञेभिरीमहे हविर्भिः । क्षयम-
स्मभ्यमसुरप्रचेतो राजन्नेनांसि शिश्रथः कृतानि ॥ उ-
दुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्यव्रते तवानागसो अदितये स्याम ॥
इमं मे वरुण श्रुधी हवमद्या च मृळय त्वामवस्युरा-
चके । तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यज-
मानो हविर्भिः । अहेळमानो वरुणेह बोध्युरुशंस
मा न आयुः प्रमोषीः ॥ ओंभूर्लोकाय स्वाहा ओंभु-
वोलोकाय० ओंस्वर्लोकाय० ओंभूर्भुवः स्वर्लोकाय स्वा-
हा ॥ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्याः अयम् ,
अपां रेतांसि जिन्वति ॥ उभा वामिन्द्राग्नी आहुव-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ध्या उभा राधसः सह मादयध्यै । उभा दातारावि-
षां रयीणामुभा वाजस्य सातये हुवे वाम् ॥ अयमि-
ह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे
विशे ॥ अयं ते योनिर्ऋत्वियो यतो जातो अरोच-
थाः । तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥
(स्तोमो देवानाम्) उपप्रयन्तो अध्वरं मन्त्रं वोचेमा-
ग्नये । आरे अस्मे च शृण्वते ॥ अस्य प्रत्नामनु
द्युतं शुक्रं दुदुह्रे अह्रयः, पयः [सहस्रसामृषिम् ॥
[अरुणो:] कदाच नस्तरीरसि नेन्द्रसश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥
परि ते दूळभो रथोऽस्माँ अश्नोतु विश्वतः । येन र-
क्षसि दाशुषः ॥ यौ ते श्वानौ यम रक्षितारौ चतु-
रक्षौ पथिरक्षी नृचक्षसौ । ताभ्यामेनं परि देहि रा-
जन्स्वस्ति चास्मा अनमीवं च धेहि ॥ यत्र वेत्थ
वनस्पते देवानां गुह्या नामानि, तत्र हव्यानि गन्तय ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राज-
यक्ष्मात् । ग्राहिर्जग्राह यदि चैतदेनं तस्या इन्द्राग्नी
प्र मुमुक्तमेनम् ॥ अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्व-
णि पर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिमं विवृधामि ते ॥
ओंभूर्भुवः स्व० ३ । ओंतद्विष्णोः परमं० ॥ ऐन्द्राग्नं
वर्म बहुलं यदुग्रं विश्वे देवा नातिविध्यन्ति शूराः ।
तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम
जीवाः ॥

[ अथ नैवेद्यम् ] अमृतेशमुद्रयाऽमृतीकृत्याऽमृतमस्तु
अमृतायतां नैवेद्यम् । सावित्राणि सावित्रस्य देवस्य त्वा
सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥
महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्व-
कर्मणे द्वार्देवताभ्यः । प्रजापतये ब्रह्मणे कलशदेवता-
भ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चतुर्वेदेश्वराय सानुच-
राय ऋतुपतये नारायणाय दुर्गायै त्र्यम्बकाय वरुणा-
य यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणयागदेवता-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

भ्यः ॥ भगवते वासुदेवाय० ८ । भवाय देवाय० ८ विनायकाय० ८ । क्लींकांकुमाराय० ८ । ह्रांह्रींसः सूर्याय० ८ । भगवत्यै अमायै० । अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय ॥ इन्द्राय वज्रहस्ताय अग्नये शक्तिह० यमाय दण्डह० नैर्ऋतये खड्गह० वरुणाय पाशह० वायवे ध्वजह० कुवेराय गदाह० ईशानाय त्रिशूलह० ब्रह्मणे पद्मह० विष्णवे चक्रह० अनन्तादिभ्यः अष्टाभ्यः कुलनागदेवताभ्यः ॥ अग्न्यादित्याभ्यां वरुणचन्द्रमोभ्यां कुमारभौमाभ्यां विष्णुबुधाभ्यां इन्द्राबृहस्पतिभ्यां सरस्वतीशुक्राभ्यां प्रजापतिशनैश्चराभ्यां गणपतिराहुभ्यां रुद्रकेतुभ्यां ब्रह्मध्रुवाभ्यां अनन्तागस्त्याभ्यां ॥ ब्रह्मणे कूर्माय ध्रुवाय अनन्ताय हरये लक्ष्म्यै कमलायै शिख्यादिभ्यः पञ्चचत्वारिंशद्वास्तोष्पतियागदेवताभ्यः ॥ ब्रह्मयादिभ्यो मातृभ्यः गौर्यादिभ्यो मातृभ्यः ललितादिभ्यो मातृभ्यः दुर्गाक्षेत्रगणेश्वरदेवताभ्यः राकादे-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

वताभ्यः त्रिकादे॰ सिनीवालीदे॰ यामीदे॰ कुहूदे॰ रौद्रीदे॰ ऐन्द्रीदे॰ वारुणीदे॰ बार्हस्पत्यदे॰ ऊँभूर्दे॰ ऊँभुवर्दे॰ ऊँस्वर्दे॰ ऊँभूर्भुवःस्वर्दे॰ अखण्डब्रह्माण्डदे॰ धूर्भ्यः उपधूर्भ्यः महागायत्र्यै सावित्र्यै सरस्वत्यै हेरुकादिभ्यो वटुकादिभ्यः तण्डलमात्रं दाधिमधुपर्कं ऊँ नमो नैवेद्यं निवेदयामि नमः ॥ [ कलशे पुष्पं । ] हिरण्यगर्भः॰ यः प्राणतो॰ य ओजोदा॰ येन द्यौ॰ य इमे द्यावा॰ यस्येमे विश्वे॰ आपो ह यन्॰ आनः प्रजां॰ ॥ अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि । अग्ने अर्चत ऊतये अर्चत प्रार्चत प्रियमेधासो अर्चत । अर्चन्तु पुत्रका उत पुरं न धृष्णुमर्चत ३ ॥

इति ऋचकं समाप्तम्

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

॥ ओ३म् ॥

अथ

# विवाहविधिः

—:०=-※-=०:—

प्रधानं। अग्निर्नो रयिं०। प्रजापते नहि त्वद्०। अग्नये, पुष्टिपतये, प्रजापतये ॥ १ ॥ अर्यम्णे गन्धर्वाय त्र्यम्बकाय विवाहोद्वाहदेवताभ्यः ॥ २ ॥ ये के च ज्मा०। अग्नये वायवे सूर्याय चन्द्रमसे विष्णवे प्रायश्चित्तयागदेवताभ्यः ॥ ३ ॥ तद्विष्णोः० विष्णुपञ्चायतनदेवताभ्यः० इन्द्रापर्वता ऐन्द्राग्नं तावत्। सावित्राणि०। महागणपतये० अग्नये पुष्टिपतये प्रजापतये ॥ १ ॥ अर्यम्णे गन्धर्वाय त्र्यम्बकाय विवाहोद्वाहदेवताभ्यः ॥ २ ॥ अग्नये वायवे सूर्याय चन्द्रमसे, विष्णवे प्रायश्चित्तयागदेवताभ्यः ॥ ३ ॥ मेषादिभ्यो द्वादश-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

राशिभ्यः । अश्विन्यादिभ्यः सप्तविंशतिनक्षत्रेभ्यः । वासुदेवादिभ्यो विष्णुपञ्चायतनदेवताभ्यः । इन्द्राय वज्रहस्ताय० । तिलतण्डुलमात्रं० । हिरण्यगर्भः स० ॥ अर्चन्तस्त्वा० ॥ अथ द्वार्देवतापूजनं ॥ तत्रादौ तृणासनं विधाय वधूवरौ तयोः पितरौ च तत्रैवानीय । शुक्लाम्बरधरं० । तीर्थे स्नेयं० । आशीर्वादं० । यदाबध्नन् ०। परमात्मने० । स्वप्रकाशो० । वनस्पतिः २० । नमो धर्म० । यत्रास्ति माता० । आत्मने नारायणाय । अद्यतावत् महागणपतये० द्वार्देवताभ्यः । धर्माय अधर्माय देहल्यै खिङ्खिन्यै मेरुप्राकारदेवताभ्यः । आत्मोद्वाहनिमित्तं कन्योद्वाहनिमित्तं दीपो नमः धूपो नमः ॥ संव्वः सृजामि० । अश्विनोः० । गायत्र्यै नमः ३ । अद्यतावत् । महागणपतेः० । धर्मस्य अधर्मस्य देहिल्याः खिङ्खिन्याः मेरुप्राकारदेवतानां आत्मनो० आत्मोद्वाहनि० कन्योद्वाहनि० द्वार्देवतापूजन[illegible] करि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ष्ये ओं कुरुष्व ॥ यवान्विकीर्य । महागणपतेरित्यासनं । स्ववामे । धर्मस्य । स्वदक्षिणे । अधर्मस्य । अधः । देहिल्याः । ऊर्ध्वे । खिङ्खिन्याः । सर्वतः । मेरुप्राकारदेवतानामिदमासनं नमः ॥ महागणपतये० त्वां पूजयामि ओं पूजय । महागणपतिं धर्मं अधर्मं देहिलीं खिङ्खिनीं मेरुप्राकारदेवताः आवाहयिष्यामि ओमावाहय ॥ स्वागतं भोः इति कन्यापिता सुस्वागतमिति वरपितोश्चारयन् जाफलं मुद्रिकायुतं विनिमयति । पाद्यार्थमुदकं नमः । शन्नो देवी० । लाजाश्च० । भगवन्तः पाद्यं २ । महागणपतये० धर्माय० पाद्यं नमः पुनः शन्नो देवी० आपः क्षीरं० भगवन्तः अर्घ्यं २ । महागणपते० । धर्म अधर्म देहिलि खिङ्खिनि मेरुप्राकारदेवताः इदं वोऽर्घ्यं नमः ॥ महागणपतये० । धर्माय० । समालभनं गन्धो नमः । एवमर्घो नमः पुष्पं नमः धूपदीपादि । दक्षिणान्तं । ततः । पृच्छां सम्पाद्य । गायत्र्यै नमः । अद्यतावत् । महाग-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

णपतेः । धर्मस्य इत्यादि अच्छिद्रं० । यवोदकं नमः उदक-तर्पणं नमः ॥ कनिक्रददिति कनिकभद्रं पठन् याग-स्थानं विशेत् ॥ अथ रक्षोघ्नमन्त्राः ॥ अग्निशरावेतिलहोमः॥ आरुणेर्वेगवतः प्राची दिगिति सूर्यस्याध्वानमीप्सितः आरुणेः स्था-नान्तरे ॥ अच्छिन्नो दैव्यस्तन्तुर्मामानुष्यच्छिदिनिग्रदो सी-दामहं तन्निमृणामि योस्मान्द्वेष्टि यं च वयं द्विष्मः । विभूरस्यऽहतं भूयासं योस्मान्द्वेष्टि यं च वयं द्विष्मः । प्रभूरस्यऽबृहन्तमतिभूयासं योस्मान्द्वेष्टि यं च वयं द्विष्मः । पूषा मा प्रपथे पातु, पूषा मा पशुपा पातु, पूषा माऽधिपतिः पातु । प्राची दिगग्निर्देवताऽग्निं स ऋच्छतु यो मैतस्या दिशो भिदासति ॥ १ ॥ दक्षिणा दिगिन्द्रो देवतेन्द्रं स ऋच्छतु० ॥ २ ॥ प्रतीची दिक्सोमो देवता सोमं स ऋ० ॥ ३ ॥ उदीची दिङ्मित्रावरुणौ देवता मित्रावरुणौ स ऋ० ॥ ४ ॥ ऊर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिं स ऋ० ॥ ५ ॥ इन्दिगऽदितिर्देवताऽदितिं स

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ऋ० ॥ ६ ॥ ज्योतिषे तन्तव आशिष्यमाशास्ते साऽनु मातनू ॥ १ ॥ इष्टुर्वा ब्राह्मणानि प्रजापतेरग्नेर्विष्णवे ॥ अग्नये पथिकृतेऽष्टाकपालं निर्वपेद्यस्याः पौर्णमासी वाऽमावस्या-वाऽतिपद्यते ॥ १ ॥ बर्हिष्पथं वा एष एति यस्याः पौर्णमा० ॥ २ ॥ अग्निर्देवानां पथिकृत्तमेवान्वारभते स एनं पन्थामपि नयति विवा एतद्यज्ञं विच्छिन्नति, यद्यज्ञे प्रतत एतामन्तरेष्टिर्निर्वपति, य एवासा आग्नेयोऽष्टाकपालः पौर्णमासे योमावस्यायां, तमग्नये पथिकृते कुर्यात्तेनैव पुनः पन्थामेवैति न यज्ञं विच्छिन्नत्यग्नये वाजसृतेऽष्टाकपालं निर्वपेत् ॥ २ ॥ सङ्ग्रामेऽग्निर्वै देवानां वाजसृद्वाजमेष धावति, यः सङ्ग्रामं जयति तमेव भागधेयेनोपधावति, वाजमेव धावति जयति सङ्ग्राममथो अग्निरेव न प्रतिधृषे भवत्यग्नये व्रतपतयेऽष्टाकपालं निर्वपेत्, य आहिताग्निः सन्नव्रतं चरेदाऽनीतो वा एष देवानां, य आहिताग्निरदत्यस्यान्नं व्रतपतिमेतस्य व्रतं

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

गच्छति, य आहिताग्निः सन्नव्रतं चरत्यग्निर्देवानां, व्रतपतिस्तमेव भागधेयेनोपधावति, व्रतपतिरेवाधिव्रतमालभतेऽग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेत् ॥ ३ ॥ आमयावीन्द्रं वै जातं रक्षांस्यऽस्य सचन्त, स आदीयमानो रक्षोभिः संमृषमाणोऽग्निं प्राविशत्तस्मादग्नी रक्षांस्यऽस्यपाहन्रक्षांस्येतं सचन्ते, य आमयाव्यऽग्निर्देवानां रक्षोहा, तमेव भागधेयेनोपधावति, सोऽस्मात्रक्षांस्यपहन्त्यऽमावास्यां रात्रीं निशि यजेताऽमावस्यां रात्रीं निशि रक्षांसि प्रेरते पूर्णान्येवैनान्यपवपति परिश्रिते यजेत रक्षसामऽन्तर्हित्यै ॥ ४ ॥ वामदेवस्यैतत्पञ्चदशं रक्षोघ्नं सामिधेन्यो भवति, वामदेवश्चैव कुसिदायी चात्मानो राजिमयान्तां तस्य कुसिदायी, पूर्वस्यातिद्रुतस्य कुमारण्यमृणात्सा द्वितीयामुपपर्यावर्तत, तेषां वार्क्षं वा छेत्स्यामीति स वामदेव उख्यमऽग्निमबिभरुस्तमेवैक्षत, स एतत्सूक्तमपश्यत् कृणुष्व पाजः प्रसितिर्न पृथ्वीमिति तामग्निरनुद्रुत्य स-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सदहत्सा दह्यमाना हृदं कौसिदं प्रासङ्गयदेतदनूच्यते रक्षसां दुष्ट्यै ५ ॥ कृणुष्व पञ्चोना रक्षोघ्नं वामदेवस्य गौतमपुत्रस्य कृणुष्व पाजः प्रसितिर्न पृथ्वीं याहि राजे वामवां इभेन, तृष्वीमनु प्रसितिद्रौणानोस्थासि विध्य रक्षसस्तपिष्टैः, तव भ्रमास आशुया पतन्त्यनुस्पृश्य धृषता शोशुचानः, तं पूष्यग्ने जुह्वा पतङ्गानसान्दितो विसृज विष्वगुल्काः, प्रतिस्पशो विसृज तूर्णितमो भवा पयोर्विशो अस्या अदब्धः । यो नो दूरे अघशंसो यो अन्त्यग्ने मा किष्टेव्यथिराधदर्षीत् । उदग्ने तिष्ठन्प्रत्या तनुष्वन्यमित्रा ओषतात्तिग्महेते । यो नो अरातिं समिधानचक्रे नीचातस्त्वं ध्यक्षतमन्नशुष्कम् । ऊर्ध्वो भव प्रतिविध्याध्यस्मादाविष्कृणुष्व दैव्यान्यग्निः । अवस्थिरा तनूहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रून् ॥ ६ ॥ स ते जानति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातु मैरत् । विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो विदुरो

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अभिद्यौत् । सेदऽग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः । पिप्रीषति सु आयुषे दुरोणे विश्वेदस्मै सुदिनासासदिष्टिः । अर्चामि ते सुमतिं घोष्यर्वाक्सतीचावाता जरतामियं गीः । स्वश्वास्त्वा सुरथा मार्जयेमास्मिन्क्षत्राणि धारयेरनुद्यून् । इह त्वा भूर्याचरेदुपत्सान्दोषावस्तुं दीदिवांसमनुद्यून् । क्रीडन्तस्त्वा सुमनसः सपेमाभिद्युम्ना तस्थिवांसो जनानाम् । यस्त्वा स्वश्वः सुहिरण्यो अग्ने उपयाति वसुमता रथेन । तस्य त्राता भवसि तस्य सखायस्त आतिथ्यमनुषग्जुजोषक् ॥ ७ ॥ महो रुजासि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय । त्वन्नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः । अस्वप्नजास्तरणयः सुशेवा अतन्द्रासो वृका अश्रमिष्ठाः । ते पायवः सध्य्रञ्चो निषद्याऽग्ने तव नः पान्त्वमूर । ये पायवो मामतेयन्त्ये अग्ने पश्यन्तो अन्दन्दुरितादरक्षत् । ररक्षतात्सुकृतोर्विश्ववेदा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

दिप्सन्त इन्द्रिमवोनाहदेशुः । त्वया वयं सदन्यस्तोता तव प्रणीत्य शामावाजान् । उभाशंसा सूदया सत्यता-तेनुष्टुया कृणुह्यह्रियाणः । अयाते अग्ने समिधा विधेम प्रतिस्तोमं शंस्यमानं गृभाय । दहाशंसो रक्षसः पाह्य-स्मान्द्रुहो निधो मित्रमहो अवद्यात् ॥ ८ ॥ उदस्थाद्धनजि-त्यऽहैरौशनस्य, ब्रह्म जज्ञानमिति स्वयम्भुवो ब्रह्मणः, ऐन्द्राग्नमिति वायोरार्षम् ॥ उदस्थाद्धनजिद्गोजिदश्वजिद्धिरण्यजित्सूनृतया परीवृतः । एतच्चक्रेण सविता रथेनोर्जोभागं पृथिवीसे-त्यापृणन् । सं वरत्रान्दधातन निरहावं कृणोतन । सिञ्चामहा अवतं वयमुद्रिणं विश्वाहादस्तमक्षितम् । ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः । स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः । अनाप्या यावः प्रथमा यस्यां कर्माणि कुर्वते । वीराण्नो अत्र मादभस्तद्व एते पुरोदधे । पूर्येषु प्रधनु वाजसातये परिवृत्राणि सेक्षणिः, । द्विषस्तरध्या ऋण-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

या न ईयसे ॥ सहस्रधा रेवते समस्वरन्देवो नाके मधुजिह्वा असश्चतः । तस्य स्पृशो न निमिषन्ति तूर्णयः पदे पदे पशवः सन्ति सेतवः । मलिम्लुचो नामाऽसि त्रयोदश मासः । इन्द्रस्य शर्मासीन्द्रस्य वर्मासीन्द्रस्य वरूथमसि । तं त्वा प्रपद्ये सगुः साश्वः सपुरुषः सह यन्मे स्थितेन । स मे शर्म च वर्म च भवा गायत्री लोमभिः प्रविशामि । त्रैष्टुभं त्वचा प्रविशामि जगतीं मांसेन प्रविशामि । अनुष्टुभमस्थ्ना प्रविशामि पाङ्क्तिं मज्जा प्रविशामि । ऐन्द्राग्नं वर्म बहलं यदुग्रं विश्वेदेवा नाति विध्यन्ति शूराः । तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः॥ इति नापितायाऽग्निशरावं दक्षिणायुतं देयम् । इतिरक्षोघ्नमन्त्राः । अथ कलशार्चनम् । यत्रास्ति माता० । महागणपतये० । अग्नये पुष्टिपतये प्रजापतये ॥ १ ॥ अर्यम्णे गन्धर्वाय त्र्यम्बकाय विवाहोद्वाहदेवताभ्यः ॥ २ ॥ अग्नये वायवे सूर्याय चन्द्रम-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

से विष्णवे प्रायश्चित्तयागदेवताभ्यः ॥ ३ ॥ मेषादिभ्यो द्वादशराशिभ्यः, अश्विन्यादिभ्यः सप्तविंशतिनक्षत्रेभ्यः, वासुदेवादिभ्यो विष्णुपञ्चायतनदेवताभ्यः । इन्द्रादिभ्यो दशलोकपालेभ्यः, अनन्तादिभ्योऽष्टाभ्यः कुलनागदेवताभ्यः, आदित्यादिभ्य एकादशग्रहेभ्यः, ब्राह्म्यादिभ्यो मातृभ्यः० । आत्मोद्वाहनिमित्तं कन्योद्वाहनिमित्तं धूपो नमः दीपो नमः । दक्षिणान्तं ॥ अथाभिषेकम् ।

सर्वौषधिजाफलयुते सजलपात्रे । संव्वः सृजामीतिकृत्वा वराभिषेकं । सर्वगन्धैः फलोत्तरैः सशिरस्कं स्नापयित्वा आहतेन वाससा प्रच्छाद्य ॥

सावित्रिहिदेव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै । अथास्मभ्यं सवितुर्वार्याणि दिवे दिव आसुवा भूरिपश्वः । भूतो भूतेषु चरति प्रविष्टः स भूतानामधिपतिर्बभूव । तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनु मन्यतामिदम् । येभिः शिल्पैः प्रपृथानामदृंहद्येभिर्द्यामभ्यपिंशत्प्रजापतिः । येभिर्वाचं विश्वरूपेभिरव्ययंस्तेनेममग्न

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

इह वर्चसा समंग्धि । येभिरादित्यस्तपति प्रकेतुभिर्येभिः सूर्यो ददृशे चित्रभानुः । येभिर्वाचं पुष्कलेभिरव्ययंस्तेने-ममग्न इह वर्चसा समंग्धि । आयम्भातु शवसा पञ्च-कृष्टीरिन्द्र इव ज्येष्ठे भवतु प्रजानाम् । अस्मिन्नस्तु पुष्कलं चित्रभान्वायं पृणातु रजसो विमानम् । यत्ते शिल्पं कश्यप रोचनावदिन्द्रियावत्पुष्कलं चित्रभानुः । यस्मिन्सूर्या अर्पिताः सप्त साकं तस्मिन्राजानमधि वि-श्रयेमम् । व्याघ्रो वै व्याघ्रे अधि विक्रमस्व दिशो म-हीः । विशस्त्वा सर्वा वाञ्छन्त्वापो दिव्याः पयस्व-तीः । या आपो दिव्याः पयसा संवभूवुर्या अन्तरि-क्ष्या उत पार्थिवासः । तासां त्वा सर्वासां रुचाभि-षिञ्चामि वर्चसा । अभि त्वा वर्चसा सिचं यज्ञेन पयसा सह । यथासो मित्रवर्धनस्तथा त्वा सविता क-रत् । इन्द्रं विश्वा अवीवृधत्समुद्रं व्यचसं गिरः । र-थीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ १ ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अभिप्रेहि वीरयस्वोग्राश्चेत्ता सपत्नहा । आतिष्ठ मित्र-
वर्धनस्तुभ्यं देवा अधिब्रवत् । आतिष्ठ वृत्रहन्रथं युक्ता-
ते ब्रह्मणाहरी । अर्वाचीनां सुतेमनो ग्रावा कृणोतु व-
ग्नुणा । आतिष्ठन्तं परिविश्वे अभूषं श्रियो वसानश्च-
रति सुरोचिः । महत्तदस्यासुरस्य नामा विश्वरूपो अ-
मृतानि तस्थौ । अनु त्विन्द्रो मदत्वऽनु वृहस्पतिरनु
सोमो अन्वग्निरावीत् । अनु त्वा विश्वे अवन्तु देवाः
सप्तराजानो य उदाभिषिक्ताः । अनु त्वा मित्रावरुणा
इहावातामनु द्यावापृथिवी ओषधीभिः । सूर्योऽहोभि-
रनु त्वाऽवतु चन्द्रमा नक्षत्रैरनु त्वावीत् । द्यौश्च त्वा
पृथिवी च प्रचेतसा यज्ञो बृहद्दक्षिणा त्वा पिपर्तु ।
अनु सुधा चिकितो सोमो अग्निरनु त्वावतु सविता
सवेन । एनाव्याघ्रं परिषस्वजानं सिंहं हिन्वन्ति महते
धनाय । मन्मृज्यन्ते द्वीपिनमप्स्वन्तररूपन्नेन्दुभ्यस्तस्थि-
वांसम् ॥ २ ॥ अपांग्यो द्रवणे रसस्तमहमस्मा अमु-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ष्मा अमुष्यायणाय तेजसे ब्रह्मवर्चसे गृह्णामि, अपां-य्यो ऊर्मी रसस्तमहमस्मा अमुष्मा अमुष्यायणाय ओ-जसे क्षत्राय गृह्णामि, अपां य्यो मध्ये रसस्तमहमस्मा अमुष्मा अमुष्यायणाय प्रजायै पुष्ट्यै गृह्णामि, अपां य्या यज्ञिया तनूस्तमहमस्मा अमुष्मा अमुष्यायणाय आयुषे दीर्घायुत्वाय गृह्णामि ॥ ३ ॥ रथे अक्षेषु वृ-षभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे । इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना ॥ या हस्तिनि द्वीपिनि या हिरण्ये गोष्वश्वेषु पुरुषेष्वन्तः । इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदा-ना ॥ सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्रह्मणे सूर्ये या । इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चे-सा संविदाना ॥ या राजन्ये दुन्दुभावायतायामश्वस्य क्रन्दे पुरुषस्य मायौ । इन्द्रं या देवी सुभगा जजान सेयमगाद्वर्चसा संविदाना ॥ राळसि विराळसि सं-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ग्राळऽसि स्वराळऽसि । इन्द्राय त्वा मधुमते मधुमन्तं श्रीणामि, इन्द्राय त्वौजस्वत ओजस्वन्तं श्रीणामि, इन्द्राय त्वा पयस्वते पयस्वन्तं श्रीणामि, इन्द्राय त्वाऽऽयुष्मत आयुष्मन्तं श्रीणामि । वर्चोसि तन्मे नियच्छ तत्ते नियच्छामि, ओजोसि तन्मे नियच्छ तत्ते नियच्छामि, पयोसि तन्मे नियच्छ तत्ते नियच्छामि, आयुरसि तन्मे नियच्छ तत्ते नियच्छामि ॥ वर्चस्वऽदस्तु मे मुखं वर्चस्वच्छिरो अस्तु मे, वर्चस्वान्विश्वतः प्रत्यङ् वर्चसा संपिपृग्धि मा । ओजस्वदऽस्तु मे मुखं ओजस्वच्छिरो अस्तु मे, ओजस्वान्विश्वतः प्रत्यङ् ओजसा संपिपृग्धि मा । पयस्वदऽस्तु मे मुखं पयस्वच्छिरो अस्तु मे, पयस्वान्विश्वतः प्रत्यङ् पयसा संपिपृग्धि मा । आयुष्मदस्तु मे मुखमायुष्मच्छिरो अस्तु मे, आयुष्मान्विश्वतः प्रत्यङ् आयुषा संपिपृग्धि मा । इममहं [illegible]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

न्तरेण साम्नाऽग्निना देवतया तेजस्ते वर्च आददेऽसौ । इदमहं त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्नेन्द्रेण देवतयोजस्ते क्षत्रमाददेऽसौ । इदमहं जागतेन छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्ना विश्वेदेवैर्देवतया प्रजां ते पुष्टिमाददेऽसौ । इदमहमानुष्टुभेन छन्दसैकविंशेन स्तोमेन वैराजेन साम्ना प्रजापतिना देवतयाऽयुस्ते दीर्घायुत्वमाददेऽसौ ॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि, मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथा सत् ॥ विश्वकर्मा विश्वदेवो विश्वजिद्विश्वदर्शितः । ते त्वा घृतस्य धारया श्रैष्ठ्याय समसूपत ॥ यतो वातो मनोजवा यतः क्षिरन्ति सिन्धवः । तासां त्वा सर्वासां रुचाभिषिञ्चामि वर्चसा ॥ अभि त्वा वर्चसाऽसिचं यज्ञेन पयसा सह । यथासो मित्रवर्धनस्तथा त्वा सविता करत् ॥ इन्द्रं विश्वा अवीवृधत्समुद्रं व्यचसङ्गिरः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ अपां यो द्रवणे रसस्तेनाहमिममऽमुमऽमुष्यायनमऽमुष्याः पुत्रं तेजसे ब्रह्मवर्चसायाभिषिञ्चामि । अपां य ऊर्मौ रसस्तेनाहमिममऽमुममुष्यायनममुष्याः पुत्रमोजसे क्षत्रायाभिषिञ्चामि । अपां यो मध्ये रसस्तेनाहमिमममुममुष्यायनममुष्याः पुत्रं प्रजायै पुष्ट्यायऽभिषिञ्चामि । अपां या यज्ञिया तनूस्तयाहमिमममुममुष्यायनममुष्याः पुत्रमायुषे दीर्घायुत्वायाभिषिञ्चामि ॥ ओं निषसाद धृतव्रतो वरुणः पस्त्यास्वः साम्राज्याय सुक्रतुः । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां, अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्या भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामि । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां, इन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि । कोऽसि कोनामासि कस्मै त्वा काय त्वा सुश्लोक सुम

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

क्तुताः सत्यराजान्, राये जातः सहसे वृद्धः क्षेत्राणां क्षत्रभृत्तमो वयोधाः, महान्महित्वा संस्तम्भे क्षत्रे राष्ट्रे च जागृहि ॥ नवकृत्व इन्द्रो राजा सविता त्वाभिषिञ्चतु, मित्रो वायुर्बृहस्पतिर्धाता क्षत्रं दधातु ते। तिलकं। सशकुनम्। अदितिस्त्वा सुष्वतु राजन्महते क्षत्राय महते ज्यैष्ठ्याय महते राज्याय महते ज्यानराज्याय महते विश्वस्य भुवनस्याधिपत्याय समस्त्वाग्ने ॥ पुनर्मार्जनं वरस्य। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां, सरस्वत्या वाचा यन्तुर्यन्त्रेणेममसुममुष्यायणममुष्याः पुत्रमग्नेः सम्राज्येनाभिषिञ्चामि इन्द्रस्य सम्राज्येनाभिषिञ्चामि ॥ (अथ वध्वाः) चतुश्शिखण्डा युवतिः सुपत्नी विनीयमाना महते सौभगाय, घृतं दुहानामदितिर्जनाय सा मे ध्वद्ध्व सर्वान्भूतिकामान् ॥ उच्छ्रयस्व वनस्पतेर्वर्ष्मन्पृथिव्यामधि समितीमीयमानो वर्चोधा यज्ञवाहसे । समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वाना अजरं सुवीरम्, आरेअस्मदमतिं बाधमान उच्छ्र

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यस्व महते सौभगाय । हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाऽभ्यागात् । दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥ (सशकुनानयनं तिलके) यस्मै त्वं सुकृतो जातवेद उलोकमग्ने कृणवस्योनम् , अश्विनं सुपुत्रिणं वीरवन्तं गोमन्तं रयिन्नशते स्वस्ति ॥ (यजमानाय) मक्षूदेववतो रथशूरो वा पृत्सुका स्वचित् । देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनोभुवन् ॥ नकिष्टं कर्मणा नशन्न प्रायोशन्न योषति । देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनोभुवन् ॥ न यजमान ऋष्यसि न सोन्वाननदेवयोः । देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनोभुवन् ॥ असदत्र सुवीर्यमुतत्यदश्वश्व्यम् । देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनोभुवन् ॥ धनञ्जयः सहमानः पृतन्यो अग्निः एष ऊर्जं यजमानाय धेहि । विश्वा पृतना सहमाना सहोभिरस्मभ्यं देहि बहुधा विरूपं यथाऽऽ अनुजीवन्ति आसाः । (यजमानतिलकं

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

शकुना० ) यानि दक्षिणानि च्छन्दांसि तान्युत्तराणि कुर्याद्यजमानो लोकेवा एतानि यानि दक्षिणानि भ्रातृव्या लोके । उत्तराण्युत्तरमेव यजमानोऽयजमानाद्भ्रातृव्यात्करोत्युत्तरो हि यजमानोऽयजमानात् ॥ इत्यभिषेकमन्त्रः ।

अथ पाणिग्रहणम् । लग्नसमयं विचार्य । पिता दक्षिणजानौ कन्यां गृहीत्वा । अथ ब्रह्मदेयायाः प्रधानविधिं वक्ष्यामः शुद्धपक्षस्य पुण्याहे पर्वणि वोदगग्रान्दर्भानास्तीर्य तेषूपविशतः प्राङ्मुखः प्रतिगृहीता, सामात्यः प्रत्यङ्मुखः प्रदाता, मध्ये प्रागग्रान्वोदगग्रान्दर्भानास्तीर्य, तेषूदकं सन्निधाय व्रीहियवान्वोप्य, दक्षिणत उदङ्ङासीनत्र्यृत्विगुपयमनं कारयेत्समेतेष्वाह, ददानीति प्रतिगृह्णामीति त्रिरावेदयत एतद्वः सत्यमित्युक्त्वा समानो वः, १ सं वो मनांसीति २ ऋत्विगुभौ वधूवरौ समीक्षमाणो जपति ॥ ॐ भगवन्कन्यां ददात्वस्मै भवान् इति दातारं प्रचोदयात् ३ । ॐ भगवन्कन्यां प्रतिगृह्णात्वस्माद्भवान् इति वरं प्र० ३ । उदकपूर्वं दत्तायाः क-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

न्यायाः प्रणवोच्चारणपूर्वम् । ॐ भगवन्कन्यां ददानि ते इति त्रिः दातारं जन्पयेत ३ । ॐ सावित्राणि० ॐ भगवन्कन्यां प्रतिगृह्णामि इति त्रिर्वरं ज० ३ । हस्तौ गृहीत्वा । तुभ्यं दत्ता कुमारी धर्मे चार्थे च कामे च त्वयेयं परिचरणीया इति दाता । मयं प्रतिगृहीता वधूः धर्मे चार्थे च कामे च मयेयं परिचरणीया इति वरः ॥ एतद्वः सत्यं ३ इत्यृत्विक् । एतन्नः सत्यं ३ इति दातृवरौ । ततो वरस्योत्तरत उपविश्य वधूम् ॥ समानाव: १ संवो मनांसीति २ श्वालिगुभौ वधूवरावादर्शे अन्योन्यमुखं समीक्षमाणौ जपति ॥ समाना व आकूतानि समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहाऽसति १ सं वो मनांसि संव्रता समुचित्तान्याकरत् । अमी ये विव्रताः स्थ न तान्वः सन्नमयामसि २ हस्तौ विमुच्य ॥ इति ब्रह्मदेयाविधिः ।

ततो विष्टरं पाद्यार्घ्यमधुपर्काणां स्थापयेत् । षडर्घ्यार्हा

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

भवन्ति आचार्य, ऋत्विक्, राजा, विवाह्यः, प्रियः

स्नातक, इति । अथैनमर्हयन्त्यादौ च कर्मणोऽर्घ्यमुदकं सौषधं दर्भा इति । कांस्ये चमसे वा दध्यासिच्य मधु च वर्षीयसा पिधाय विष्टराभ्यां परिगृह्य पाद्यप्रथमैः प्रतिपद्यन्ते । मयि दोहोसि विराजो दोहः पाद्यायै विराजो दोहमशीयेत्याह्रियमाणमनुमन्त्रयते । विष्टरोसि मातरसीदेति विष्टरमास्तीर्य तस्मिन्नुपविशति ॥ "भगवन्विष्टरो विष्टरो विष्टरः" विष्णोर्महाराजस्येदमासनमास्यताम् ॥ विष्टरमासीनायैकैकं त्रिः प्राह ॥ नैव भोरित्याह न मार्षीति ॥ शन्नो देवी० । लाजाश्च० । भगवन्पाद्यं २ ओं भगवन्पाद्यं ददानि ते ३ । ओं भगवन्पाद्यं प्रतिगृह्णामि ३ मयि दोहोसीति वरः पाद्यपात्रं दक्षिणपाणिनाऽधाय सव्ये पाणौ निधाय, दक्षिणं पादमवनेनिज, इदमहमस्मिन्कुले ब्रह्मवर्चसं दधामि, उत्तरं पादमवनेनिज, इदमहं मां मयि तेजो वीर्यमन्नाद्यं प्रजां पशून्ब्रह्मवर्चसं दधामि ॥ पुनः शन्नो दे-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

वी० । आपः क्षीरं० । भगवन्नर्घ २ ओं भगवन्

र्घ्यं ददानि ते ३ ओं भगवन्नर्घ्यं प्रतिगृह्णामि ३ पाद्यपात्रवद्गृहीत्वा । आपो हिष्ठेति तिसृभिश्शिरसि कुशपवित्रेणापः क्षिपेत् । पवित्रं निवार्य । विष्णवे महाराजाय समालभनं गन्धो नमः ॥ विष्णुपत्न्यै दुहित्रे लक्ष्म्यै समालभ० । एवमर्घो नमः पुष्पं नमः धूपो दीपः ॥ यज्ञोपवीतं वासो नमः । यज्ञोपवीतं परम० विष्णोः सपत्नीकस्यार्घ्यदानाऽभ्यर्चनविधिः सर्वः परिपूर्णोऽस्तु ॥ सावित्राणीति मधुपर्कः । मधुपर्कं विदुस्त्र्यङ्गं याज्ञिका यज्ञकर्मणि । माक्षिकं च घृतं चैव सुजातं शोभनं दधि ॥ भगवन्मधुपर्को मधुपर्को मधुपर्कः । ओं भगवन्मधुपर्कं ददानि ते ३ सावित्राणि० ओं भगवन्मधुपर्कं प्रतिगृह्णामि ३ विष्टरोऽस्यऽन्तरिक्षमाधि विश्रयस्वेति वर्षिष्टपात्रस्योपरिस्थितं विष्टरमुत्क्षिपति विष्टरमऽवकृष्य । उरु त्वेत्यऽपसार्य । उरु त्वा वाताय० ।, तच्चक्षुरित्यवीक्ष्य । पृथिव्यस्त्वेति मधुपर्कपात्रे विष्टरऽधःस्थितं भूमौ निधाय ॥ पृथिव्यास्त्वा ना-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मौ साधयामीति । मधु वात इति तिसृभिः प्रदेशि-
न्या प्रदक्षिणमालोडयति । मधु वात ऋतायते मधु
क्षरन्ति सिन्धवः माध्वीर्नः स० ॥ वसवस्त्वाऽग्निराजानो
भक्षयन्तु इति पूर्वतः । पितरस्त्वा यमराजानो भक्षयन्तु
इति दक्षिणतः । रुद्रास्त्वा सोमराजानो भक्षयन्तु इति
पश्चिमतः । आदित्यास्त्वा वरुणराजानो भक्षयन्तु इ-
त्युत्तरतः । विश्वे त्वा देवा बृहस्पतिरा० इति प्रद-
क्षिणं प्रतिदिशं प्रतिमन्त्रं पात्रस्यान्तेषु लेपान्निर्मार्ष्टि ।
यन्मधुनो मधव्यस्येति च । यन्मधुनो मधव्यस्य पर-
मन्नाद्यं रूपं, तेनाहं मधुनो मधव्यस्य परमस्यान्नाद्य-
स्य परमान्नादो मधव्यो भूयासं, त्रय्यै विद्यायै यशो-
सि, श्रियै यशोसि, यशसे ब्रह्मणो दीप्तिरसि इति ॥
सत्यश्रीरिति मधुपर्कस्याङ्गुष्ठद्वितीयाभिः कनिष्ठया प्रथ-
ममेवमनुपूर्वं सर्वाभिश्चतुः प्राश्य, तदवशिष्टं सुहृदे प्र-
यच्छति ॥ सत्यश्रीः, यशः श्रीः, मयिश्रीः, श्रीः
श्रियतामिति ॥ ॐ भगवन्नाचमनीयं ३ त्रिरित्युक्त्वा ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

विष्णवे महाराजाय आचमनीयं नमः । अमृतोपस्तर-
णमसि स्वाहेत्यप आचमति । विष्णवे महाराजाय स-
पत्नीकाय दक्षिणायै० । [भाषया युन्यपौरोतो] । तस्मात्रासिपा-
णिर्गां आह, भगवन्गौः ३ गां प्रकरिष्ये ३ मा प्र-
मार्षीः ३ इति तां शास्ति, इत्युक्त्वा मम चामुष्या-
श्च पाप्मानं जहि, हतो मे पाप्मानं हतं कुरुतेति,
चतुरो नानागोत्रान्ब्राह्मणान्भोजयेत् । एष आद्योपायो,
यद्युत्सृजेत्तदा माता रुद्राणामिति जपेत् ॥ माता रु-
द्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः ।
प्रनुवोचं चिकितुषे जनाय मा गामनागामदितिं व-
धिष्ठ १ सूर्यवसाद्भगवती हि भूया अथो वयं भगव-
न्तः स्याम । अद्धि तृणमघ्न्ये विश्वधानीं पिब शुद्ध-
मुदकमाचरन्ती २ । ओं ३ उत्सृजत तृणान्यऽत्वित्यु-
क्त्वा तामुत्सृष्टां पशुमाङ्गं वा नामांसो मधुपर्कः स्या-
दिति ह ज्ञायतेऽपि वा घृतौदन एव स्यादिति ॥
CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri
मधुपर्के च यज्ञे च पितृदैवतकर्मणि । अत्रैव पशवो

हिंस्या नान्यत्र मनुरब्रवीत् ॥ इति मधुपर्कं विधिः ।

तदुक्तं । शमीशाखा पलाशी च मन्त्रश्चोदकपूर्वकम् । चतुर्विधं तु यत्पूतं तच्च गांगोदकं स्मृतम् ॥ सर्वौषधीभिः संयुक्ताः शुष्का आमलकात्वचः । स्नाने मंगलिके प्रोक्ता अलक्ष्मीनोदना बुधैः ॥ २ ॥ अनृक्षरा इत्युदकमनीय । अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्तिनो वरेयम् । समर्यमा सम्भगो नो निनीयात्सञ्जास्पत्यं स्वयममस्तु देवाः ॥ इति वधूपद्धीयकन्यायाः [भाषया गङ्गविस्यह] । हस्ते दत्त्वा । ततः स्नानमण्डपं कन्यां नीत्वा चतुष्पादे भद्रपीठे संस्थाप्य । शन्न इति स्नापयेत् । ॐ शन्न आपो धन्वन्याः शन्नः सन्त्वनूप्याः । शन्नः समुद्रिया आपः शमु नः सन्तु- या इमा ॥ इत्यऽकेवलाभिरद्भिः स्नाताम् । या अकृन्तन् या अवयन् या अतन्वत याश्च देवीरन्तामभितोऽततन्थ । तास्त्वा देवीर्जरसा संव्ययन्त्वाऽयुष्मतीदं

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

परिधत्स्व वास इत्याहत वासः परिधाप्य ॥ आशासा-

नेत्यन्तरतो मौञ्जेन दर्भेण योक्त्रेण वा कन्या स्वयं सन्नह्यति ।। वधूरिमं मन्त्रं वाचनीया मौञ्जीं गृह्यमाना ।। आशासानः सौमनसं प्रजां सौभाग्यं रयिम् । अग्नेरनुव्रता भूत्वा सन्नह्ये सुकृताय कम् ।। प्रेतो मुञ्चामीति सन्नहनं (मौञ्जीं) ग्रन्थयेत् ।। प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करत् । यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगा सती ।। पूषा त्वेतो नयतु हस्तं गृह्याश्विनौ त्वा प्रवहतां रथेन । गृहान्गच्छ गृहपत्नी यथाऽसो वशिनी त्वं विदथेमां वदासि ।। मा विदन्परिपन्थिनो य आसीदन्ति दम्पती । सुगेभिर्दुर्गमऽतीतामऽपद्रवन्त्वरातयः ।। इत्युदानीयोक्तं वाससः कर्म ।

अथ मङ्गल्यमालाकर्म । यथा कश्मीरेषु श्वश्रूरन्या वा विधवा वधूवरयोः शिरसि मङ्गल्यमालां बध्नाति ।। यजमानपत्नीमानीय । तीर्थे स्नेयं॰ यत्रास्तिमाता॰ कन्योद्वाहनिमित्तं धूपदीपः ।। महेश्वरस्त्र्यम्बकश्च ईशानः शिव एव च । भवः शर्वश्च रुद्रश्च दक्षिणादिक्रमेण तु ।।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

पुष्पं वरस्य । महेश्वराय नमः दक्षिणपादे । त्र्यम्बकाय नमः वामपादे । ईशानाय नमः दक्षिणजानौ । शिवाय नमः वामजानौ । भवाय नमः दक्षिणस्कन्दे । शर्वाय नमः वामस्कन्दे । रुद्राय नमः शिरसि ॥ विष्णवे महाराजाय समालभनं गन्धो नमः एवमर्घपुष्पधूपदीपाः वासः पुष्पमालां बध्नाति । पुष्पवती० इति मन्त्रेण । गौरी चैवतु गायत्री सावित्री च सरस्वती । उमा कान्ता भवानी च वामावर्तेन पूजयेत् ॥ गौर्यै नमः वामपादे । गायत्र्यै नमः दक्षिणपादे । सावित्र्यै नमः वामजानौ । सरस्वत्यै नमः दक्षिणजानौ । उमायै नमः वामस्कन्दे । कान्तायै नमः दक्षिणस्कन्दे । भवान्यै नमः शिरसि ॥ विष्णुपत्न्यै दुहित्रे लक्ष्म्यै समालभनं गन्धो नमः ॥ एवमर्घपुष्पधूपदीपाः वासः पुष्पमालां बध्नाति । पुष्पवती० इति मन्त्रेण । विष्णोः सपत्नीकस्यार्घदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु । अन्नं नमः २ शन्ना दवी० ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

पोशानं नमः। पुनः शन्नो देवी०। विष्णवे सपत्नीकाय दक्षिणायै। वधूवरयोर्मुखे नैवद्यं ( सामनामद )। आचारिकानि द्रव्यानि वस्त्राण्याभरणानि च। मणिमुक्तप्रवालानि यथाशक्तिर्विधीयते ॥ गोभूहिरण्यमश्वांश्च वस्त्राणिविविधानि च। अन्यानि सर्वदानानि यथाविभवतस्तथा ॥ इति मङ्गल्यमालाकर्म। अथाग्निकर्म।

पात्रं तिला० अग्निं परिसमुह्य। पर्युक्ष्य। परिषिच्य। परिस्तीर्य १६ अग्नये समनमत्०। उद्वाह अक्षतसक्तूनां विवाहे लाजानां यागः। अग्नये पुष्टिपतये प्रजापतये जुष्टं निर्वपामि। एवं प्रोक्षामि। अक्षतसक्तूनां सेक्षणं न भवति। आज्यभागान्तं हुत्वा। अपरेणाग्निमनो रथं वाऽवस्थाप्य वधूवरौ प्राङ्मुखौ तिष्ठन्तौ। योगे योगे० इति मन्त्रावृत्त्या युनक्ति कश्यपस्य ॥ योगे योगे०। दक्षिणमितरमुत्तरामितरां तूष्णीं विमुच्य। तत उपविश्य। खे रथस्येतिहिरण्यपूर्ध्वपाशे ग्रन्थिनाद्दौर्बद्ध्वा ॥ खे रथस्य खेऽनसः खे युगस्य शत-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तो । अपालामिन्द्रस्त्रिष्पूता करोतु सूर्यवर्चसमिति हिरण्यं निष्ठ्यक्य बद्ध्वाध्यधि मूर्धनि दक्षिणस्मिन्युगतत्त्वमन्यऽद्भिरेव प्रक्षालयति ॥ शन्ते हिरण्यमिति च ॥ शन्ते हिरण्यं शमु सन्त्वापः शन्ते मेथीभवतु शँ युगस्य तत्त्वम । शन्त आपश्शन्त पवित्रा भवन्त्वेनापत्या तन्वा संसृजस्वेति वधूमन्तरा वराग्नी आनीय वरस्य दक्षिणत उपवेश्याध्यधि मूर्धनि दक्षिणस्मिन्युगच्छिद्रे तद्धिरण्यं निष्टक्य बद्धमवस्थाप्याप आसिञ्चति ॥ शान्ते हिरण्यमित्येतया । ततो वरस्योत्तरतो वधूमुपवेश्य दक्षिणतः पुमान्भवत्यथ जुहोति ॥ अग्नये जनिविदे स्वाहा, सोमाय जनिविदे स्वाहा, गन्धर्वाय जनिविदे स्वाहा, । आयुषः प्राणमित्येकादश नाभेर्भौवनस्यार्षम् ॥ आयुषः प्राणं सन्तनु स्वाहा० ११ दिवः स्वरित्यन्तम् ॥ जयाभ्याताभ्यां राष्ट्रभृतश्च तानि यथोक्तमाधिपत्यानि जुहोति । आकूतमिति त्रयोदशाहुताद्वादशगृहीतेन प्रतिमन्त्रं जुहुयात् इति सांगाविः

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तेजोसि । जयाजयानां चित्राबलाकस्य सौरेः ॥ आ-
कूतं चाकूतिश्चाधीतं चाधीतिश्च विज्ञातं च विज्ञातिश्च
चित्तं च चित्तिश्च नाम च ऋतुश्च दर्शश्च पौर्णमासश्च ।
प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु ।
तेभिर्वाजं वाजयन्तो जयेम तेनेमा विश्वाः पृतना
अभिष्याम स्वाहा ॥ बृहस्पतिः पुरोहिताइत्यभ्या-
तानां देवानाम् । तेजोसि । बृहस्पतिः पुरोहितः० म-
स्यां देवहूत्यां स्वाहेति यावत् । राष्ट्रभृतो राष्ट्रभृतामो-
पनिषदानामृषीणाम् ॥ ऋता षट् १ तस्यौषध २ सु-
षुम्णा ३ तस्य नक्षत्रा ४ संहितो ५ तस्य मरीच ६
भुजुप्सु ७ तस्य दक्षिणा ८ प्रजापति ९ तस्य ऋक्सा-
म १० इषिरो ११ तस्यापोप्सु १२ सनो भुवनस्य० ॥
अग्निर्भूतानामेकविंशमाधिपत्यानि जुहोति ॥ अग्निर्भूता-
नामधिपतिः स माऽवतु तस्मै स्वाहा १ यमः पृथि-
व्या अ० २ वायुरन्तरिक्षस्याधि० ३ सूर्यो दिवोऽधि०
४ चन्द्रमा नक्षत्राणाम्० ५ विष्णुर्दिशाम्० ६ पूषा

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

पथीनामधि० ७ त्वष्टा रूपाणाम० ८ सविता प्रसव
नाम० ९ इन्द्रो ज्येष्ठानाम० १० मित्रः सत्यानाम
११ वरुणो धर्माणाम० १२ रुद्रः पशूनाम० १३ बृ
हस्पतिर्ब्रह्मणाम० १४ ब्राह्मणो वाचाम० १५ सोम ओ
षधीनाम० १६ समुद्रः स्रवन्तीनाम० १७ अन्नं साम्रा
ज्यानाम० १८ गायत्री च्छन्दसामधिपत्नी स माऽव
तस्यै स्वाहा १९ मरुतो गणानामधिपतयस्ते माऽवन्
तेभ्यः स्वाहा २० पितरः पितामहाः परेवरेभ्यस्ते न
पान्तु ते नोऽवन्त्वऽस्मिन्ब्रह्मण्यस्मिन्कर्मण्यस्मिन्क्षत्रेऽस्या
माशिष्यस्यां पुरोधायामस्यां देवहूत्यां स्वाहा २१ आकू
त्यै त्वा स्वाहा । कामाय त्वा स्वाहा । समृधे त्व
स्वाहा ॥ हिरण्यगर्भ इत्यष्टाभिः । हिरण्यगर्भः १ य
आत्मदा २ य ओजदा ३ येन द्यौ ४ य इमे ५ य
स्येमे ६ आपो ह यन्म ७ आनः प्रजा ८ ॐ भू
स्वाहा । ॐ भुवः स्वाहा । ॐ स्वः स्वाहा । ॐ भू
CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri
र्भुवः स्वः स्वाहा ॥ अग्ने इति त्रिभिराज्य जुहो । या

इति त्रिभिः स्वाहान्तैर्वध्वा मूर्धनि संपातानवनयेत् ॥
अग्न आयूंषि पवस आसवोर्जमिषं च नः, आरे बाध-
स्व दुच्छुनाम् १ या ते पतिघ्नी तनूरपतिघ्नीं ते तां
करोमि स्वाहा १ अग्निर्ऋषिः पवमानः० या तेऽपुत्री-
या तनूः पुत्रीयां ते तां करोमि स्वाहा २ अग्ने पव-
स्व० १ या तेऽपशव्या तनूः पशव्यां ते तां करोमि
स्वाहा ३ ॥ अक्षतसक्तूनां यागः । अग्निं पुष्टिपतिं प्र-
जापतिं च यजेत । अग्निना रयिं० १ प्रजापते न हि०
। २ ॥ उदगग्रान्दर्भानास्तीर्य, तेषु प्राङ्मुखीं वधूम-
वस्थाप्य, तस्या वरः प्रत्यङ्मुखस्तिष्ठन्नेव हस्तौ गृह्णाति ।
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ता-
भ्यां हस्तं गृह्णामीति हस्तं गृह्णाति । दक्षिणमुत्तानं सा-
ङ्गुष्ठं नीचारिक्तमरिक्तेनैवं सव्यं सव्येन । गृभ्णामीति
चतस्रो वरं वाचयति ॥ गृभ्णामि ते सुप्रजस्त्वाय ह-
स्तौ मया पत्या जरदष्टिर्यथासत् । भगो अर्यमा सवि-
ता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः १ तां पूष-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

शिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति । या न
ऊरू उशती विश्रया ते यस्यामुशन्तः प्रहराम शेपम्
सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये । रयिं च पुत्रां
श्चादादग्निर्मह्यमथो इमाम् ३ सोमः प्रथमो विवेद ग
न्धर्वो विवेद उत्तरः । तृतीयोऽग्निष्टे पतिस्तुरीयोहं म
नुष्यजः ४ ततो गाथा वरं वाचयति ॥ सरस्वति प्रद
मवेति अनुवाकावुभावित्येके । सरस्वति प्रेदमव सुभ
वाजिनीवति । यान्त्वा विश्वस्य भूतस्य प्रगायाम्यस्याग्र
तः १ याग्रे सर्वं समभवद्यस्यां विश्वमिदं जगत् । ता
मद्य वाचं गास्यामि या स्त्रीणामुत्तमं मनः २ य इ
पूर्वे जना असन्पूर्वे पूर्वतरेभ्यः । मूर्ध्वन्वांस्तेभ्यो गन्धर्व
पुरा देवेभ्य आतपत् ३ य एति सर्वतः प्राग्भ्यो दि
ग्भ्योधि पवमानः । मूर्ध्वन्वान्० ४ स भगवो न
मरिष्यस्यहं चेदस्मि भेषजम् । मूर्ध्वन्वान्० ५ हिरण्य
वर्णो वैरूप्यः सत्त्वामन्मनसं करोतु । यद्राजायाति स
मितिं समुद्रमिव सौभव: ६ न वा तस्याभिवायते नो

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ा तस्याभिधीयते । न वा तस्य धुरं वहतु नोद्वा त-
ापमीयते ७ आसद्यो हरितो रथः सौश्रुवः सुहिर-
ययः । तं वात इद्बुजीयत्युद्वातो दृढया धुरा ८ त-
व राजन्दुन्दुभयस्तव दुन्दुभिरानकः । तव वातोद्वाता
श्वौ तव चित्ररथं वनम् ९ ते शुक्रं शक्रस्याविन्द-
राश्चं निहितं गुहा । मूर्ध्वन्वांस्तेभ्यो गन्धर्वः पुरा
भ्य आवृदः १० (अनु १) हिरण्यवर्णां सुभृतं
भिमानं, कन्याया हस्तं प्रतिगृह्य पुण्यम् । सा पु-
कामा सुभगाय भर्त्रे, भवेद्वशेयं गिरिवत्स्थिराय ॥
रुम्पे मणिपर्वते गिरौ हरितसंकाशे । संकल्परमणोऽ-
रा उभौ सुमनसौ चरावः १ आणीव रथे वेष्टसि
ने वारि वर्षिण्ये । अप्सराः सूर्यवर्चस्विनी वशिनी
न्मना भूयाः २ याऽसा उपरि तिष्ठति वने वारि व-
ण्ये । वसुगा सूर्यवर्चस्विनी वशिनी मन्मना भूयाः ३
श्वत्थक उपरि श्येनो रमणीयतरो नाम । तस्मिन्ह र-
मते ... इव परितर्मायाम् ४ ... आनन्द...
वा

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ना सुभगे निर्गिरिभ्यः सरस्वति । मातेव दुहित
कुल्याभ्यो विसजा वसु ५ मध्यं तं च्छन्दस आ
त्रादधुर्नाम परेति देवाः । अरुणपिशङ्गोऽश्वोस्य द
णायस्तद्वेदस इहागन्तुमर्हति ६ इषीकवर्णो लेखभ्रू
गे सुसिते । मूर्ध्वन्वांस्त्वा गन्धर्वो सामभिर्नियच्छ
उभये त्वा देवगन्धर्वा सध्र्यंचो विह्वयामहे । तेषां
तरान्कामयासि तानभ्येहि सरस्वति ८ अभ्यावर्तेऽह
वान् गायतः कामयामहे । गायन्तं स्त्रियः काम
न तथा ब्रह्मवादिनम् ९ याऽस्मा उपरि पर्वत आ
ना रममाणेव । चौमसृद्धी हव अस्ति त्वोत ओ
शृणातु इति १० (अनु० २) यदि पृथक्तन्त्रं प्रद
णामग्निमानीय, तत्रैवोपविश्य संस्थापयेत् ॥ वरपक्ष
यजमानानां तिलकं कुर्यात् । तत ऋतुतिथ्यादितन्
माप्तिः इति विवाहः ॥ १ ॥ अथोद्वाहः । पुन
छ समुह्य पर्युक्ष्य परिषिच्य ८ परिस्तीर्य १६ ल
वस पूर्णां । इदमर्यम्णे, इदं ...

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ति लाजान् शमीपर्णमिश्रान् शूर्पे सपवित्रे तस्मिन्नेवाग्नौ
संस्कृत्य चतुरङ्गुलिमात्रान् कल्पयेत् । आज्यभागान्तं हुत्वा
। इमे द्यावा इति चतस्रः । य इमे द्यावा १ यस्ये-
। विश्वे २ आपो ह यन् ३ आनः प्रजा ४ ओं भूः
स्वाहा, ओं भुवः स्वाहा, ओं स्वः स्वाहा, ओं भू-
र्भुवःस्वः स्वाहा, ॥ अग्न आयूंषि० या ते पतिघ्नी० ।
अग्निर्ऋषिः० या तेऽपुत्रीया० २ अग्ने पवस्व० या
ऽपशव्या० । अग्नये जनिविदे स्वाहा० । आयुषः
प्राणमिति० । तेजोसि । आकूतंचाकूतिश्चेति । तेजोसि ।
बृहस्पतिपुरोहिता इति । ऋताषाडिति । अग्निर्भूताना-
मिति । अग्निर्भूतानाम० । यमः पृथिव्या० । वायुर-
० । सूर्यो दिवो० । चन्द्रमा नक्ष० । विष्णुर्दि-
० । पूषा पथीनां० । त्वष्टा रूपानां० । सविता
त्रा० । इन्द्रो ज्येष्ठा० । मित्रः सत्याना० । वरुणे-
र्माणा० । रुद्रः पशू० । बृहस्पतिर्ब्रह्मणा० । इमेवो
CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri
। वाचा० । साम आप० । समुद्रः स्रवन्ती० ।द्वती-

न्नं सम्रा० । गायत्री च्छन्द० । मरुतो गणाना०
पितरः पितामहाः परेवरेभ्यस्ते नः पान्तु ते नोऽव
ऽस्मि० । आकूत्यै त्वा इति । हिरण्यगर्भ इति चत
हिरण्यगर्भः ॥ १ ॥ यः प्राणतो ॥ २ ॥ य
जदा ॥ ३ ॥ येन द्यौ ॥ ४ ॥ इत्यन्तं जुहुयात
उत्तरेणाग्निं वधूवरावानीय । पश्चादग्नेर्दर्भेषूपविश्य ।
त्वमसीति वरं वाचयति । सा त्वमऽस्यऽमोऽहमऽ
हमऽस्मि सा त्वं ता एहि विवाहावहै । पुंसे पु
कर्तव्ये रायस्पोषाय सुप्रजस्त्वाय सुवीर्याय । इत्या
भिदक्षिणमानीय उभौ प्राङ्मुखाववस्थाप्य । एह्याश
नमातिष्ठाश्मेव त्वं स्थिरो भव । कृण्वन्ति विश्वे
आयुस्ते शरदः शतमिति दक्षिणपदाऽश्मानमास्था
वरः । आतिष्ठेममिति दक्षिणपदैव वधूश्च । अ
ष्ठेममऽश्मानमऽश्मेव त्वं स्थिरा भव । प्रमृणीहि
वस्यवः सहस्व पृतनायतः ॥ ततो वध्वा अञ्ज
अग्निवेगाऽध्यायस्तृणाति । इदं हविरिति लाजान्व

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

भिमृशति । इदं हविः० । अथास्यै शमीलाजानावप-
ति शमीपर्णमिश्रांल्लाजानञ्जलिना प्रजापत्यतीर्थेनावपति
भ्राता ब्रह्मचारी वा कश्चित् [भाषया लायभोय] ता-
नऽविच्छिन्दती जुहोति ॥ अर्यमणं नु देवमिति वद-
न्ती वधूर्लाजाञ्जुहोति । अर्यमणं नु देवं कन्या अग्नि-
मयक्षत सोऽस्मान्देवो अर्यमा प्रेतो मुञ्चतु मामभुष्य (व-
रस्य षष्ठ्यन्तं नाम गृह्णाति वधूः) गृहेभ्यः स्वाहा ॥
इति प्रथमो होमः । [अग्निर्मा इति वरं नारी वा गुरुः वा-
चयति]। अग्निर्मा जनिमानऽनया जनिमन्तं करोतु जी-
वपत्निर्भूयासम् । इयं नार्युपब्रूते तोक्मान्यावपन्तिका
दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम । (इत्येवं [illegible]
रुत्तरं पर्ययणे पर्ययणे लाजाहोमो यजमानं चाश्म
चास्थापति)। पुनः एह्यश्मानं० । आतिष्ठेम० । [illegible]
न्धर्वमिति वदन्ती वधूर्लाजाञ्जुहोति ॥ गन्धर्वं पतिवे-
दनं कन्या अग्निमयक्षत । सोऽस्मान्देवो गन्धर्वः प्रेतो
मुञ्चतु मामभुष्य [नाम] गृहेभ्यः स्वाहा ॥ इति द्विती-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यो होमः । (सोमो मेति वरं वाचयति)। सोमो
ज्ञातिमानऽनया ज्ञातिमन्तं करोतु जीवपत्निर्भूयासम्
इयं नार्युपब्रूते, तोक्मान्यवपन्तिका दीर्घायुरस्तु मे
तिरेधन्तां ज्ञातयो मम ॥ इत्येवं द्वि० । एह्याश्मा०
आतिष्ठेमं० । त्र्यम्बकमिति वदन्ती वधूर्लाजाञ्जुहोति
त्र्यम्बकं यजामहे सुगन्धि पतिपोषणम् । उर्वारुकमि
बन्धनान्मृत्योर्मुक्षीय माऽमुष्य [नाम] गृहेभ्यः स्वाहा
पूषा मा इति नारी वरं वाचयति ॥ पूषा मा पशुमा
ऽनया पशुमन्तं करोतु जीवपत्निर्भूयासम् । इयं नार्युप
ते, तोक्मान्यवपन्तिका दीर्घायुरस्तु मे पतिरेधन्तां ज्ञा
तयो मम । नात्र प्रदक्षिणम् । तत उपविश्य । मरुत्ता वा
होमाश्च लाजाहोमश्च नित्यशः । आसीनेन न होतव्
आघारो दक्षिणस्तथा ॥ ऋतुतिथिः ॥ इव्वामग्नेति ल
जा शूर्पेण ॥ पूर्णां तावत् ॥ (तूष्णीं हस्तौ विमुच्य)
वि ते मुञ्चामीति सन्नहनं विमुञ्चेत् । वि ते मुञ्चामि
रशनां वि रश्मीन् वि योक्त्राणि परिवर्तनानि । द्रव्यं वासं

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

द्रविणेह भद्रं प्रमां ब्रूताद्धविर्दान्देवताभ्यः ॥ तत उत्त-
रतोऽग्नेर्दर्भेषु प्राचीं प्रक्रामयति ॥ एकं, इषे १ द्वे,
ऊर्जे २ त्रीणि, रायस्पोषाय ३ चत्वारि, मयोभवाय ४
पञ्च, प्रजाभ्यः ५ षट्, ऋतुभ्यः ६ दीर्घायुत्वाय,
सप्तमं ७ सखा सप्तपदा भव सुमृळीका सरस्वति मा ते
व्योम सन्दृशे ॥ "विष्णुस्त्वाऽन्वेतु" इत्येवं सप्तमं पदं
यावदनुषङ्गः ॥ नोदकेन न वा वाचा कन्यायाः पतिरु-
च्यते । पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥ तच्चक्षु-
रिति आदित्यमुपस्थापयति दिवा अस्तमितेऽग्निमुपस्थापयप-
ति रात्रौ ॥ जीवन्तीं पश्यसि, पश्यामः, ध्रुवं पश्यसि प-
श्यामः, स्वस्त्यात्रेयं पश्यसि पश्यामः, अरुन्धतीं प-
श्यसि पश्यामः । एतेषामेकैकं पश्यसि इत्याह ऋत्विक् ।
पश्यामइति सर्वत्र प्रत्याह वधूः ॥ सुमङ्गलीरियं वधू-
रिमां समेत्य पश्यत । सौभाग्यमस्यै दत्वा यथास्वं वि-
परेतन । इति वीक्षितानानुमन्त्रयते ॥ उदुत्तममिति चतु-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

र्थीं वधूमेशान्यां दिशि यातीमनुमन्त्रयते । यतो वा स्या-

त्त्वङ्कर्तृवेश्म ॥ उदुत्तममारुहन्ती व्यस्यन्तीव पृतन्यतः । मूर्धानं पत्युराऽरोह प्रजया च विराङ्भव । १ इमां त्वमिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि २ सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्वां भव । ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ३ स्नुषाणां श्वशुराणां च प्रजया च धनेन च । पतीनां देवराणां च सजातानां विराड् भव ४ आदौ सुवर्णं रजतं वापि स्ना पात्रे तस्य निक्षिपेत् ।

अथ सूर्यवर्गं पठेत् । सत्येन सप्तचत्वारिंशत्सावित्री सूर्यात्मदैवतमानुष्टुभं पञ्चभिः सोममस्तौत्पराभिः सुविवाहं सप्तदश्यादेवान्परया सोमार्कौ परया चन्द्रमसं परा नृणां विवाहमन्त्राशीः प्राया नवो नवस्त्रिस्रोऽनृचरा गृह्णामीति द्वे द्वे यदाश्विना पूषा घोरचक्षुरिति त्रिष्टुभस्तृष्टमुरो बृहती पूर्वापरमिह प्रियमानः प्रजां जगत्यवृहती पंक्तिमिन्द्रो वृषाकपिः ॥ संसृष्टमिति विज्ञयाः सौर्याः पञ्चाशतमृचः । अधीयास्ता वि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

बाहेषु नायुग्भिर्वेदपारगैः ॥ ओं संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तं वरुणश्च मन्युः । भियं दधाना हृदयेषु शत्रवः पराजितासो अपनिलयन्ताम् ॥ १ ॥ सत्येनोत्तभिता भूमिः सूर्येणोत्तभिता द्यौः । ऋतेनादित्यास्तिष्ठन्ति दिवि सोमो अधिश्रितः ॥ २ ॥ सोमेनादित्या बलिनः सोमेन पृथिवी मही । अथो नक्षत्राणामेषामुपस्थे सोम आहितः ॥ ३ ॥ सोमं मन्यते पपिवान्यत्संपिशन्त्योषधिम् । सोमं यं ब्रह्मणो विदुर्न तस्याश्नाति कश्चन ॥ ४ ॥ आच्छद्विधानैर्गुपितो बार्हतैः सोमो रक्षितः । गृभ्णामि चक्षुण्वाँस्तिष्ठसि न ते अश्नाति पार्थिवः ॥ ५ ॥ यत्त्वां देवाः प्रपिबन्ति तत आप्यायसे पुनः । वायुः सोमस्य रक्षिता समानं मास आकृतिः ॥ ६ ॥ (व० १) रैभ्यासीदनुदेयी नराशंसीन्योचनी । सूर्याया भद्रमिद्वासो गाथयैति परिष्कृतम् ॥ ७ ॥ चित्तिरा उपबर्हणं

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

चक्षुरा अभ्यञ्जनम् । द्यौर्भूमिः कोश आसीद्यदयात्

र्यां पतीम् ॥ ८ ॥ स्तोमा आसन्परिधयः कुरीरं च्छन्द ओपशः । सूर्याया अश्विना वराग्निरासीत्पुरो गवः ॥ ९ ॥ सोमो वधूयुरऽभवदऽश्विना स्तामुभावरा । सूर्यां यत्पत्ये शंसन्तीं मनसा सविता ददत् ॥ १० ॥ मनो अस्या अनु आसीद्द्यौरासीदुत च्छदिः । शुक्रावनुड्वाहावास्तां यदयात्सूर्या गृहम् ॥ ११ ॥ [ व० २ ] ऋक्सामभ्यामभिहितौ गावौ ते सोमवावितः । श्रोत्रं ते चक्रे आस्तां दिवि पन्थाश्चराचरः ॥ १२ ॥ शुची ते चक्रे यात्या व्यानो अक्ष आहतः । आ नो मानस्मयं सूर्याऽरोहत्प्रयती पतिम् ॥ १३ ॥ सूर्याया वहतुः प्रागात्सविता यमऽवासृजत् । अघास्व हन्यते गावोर्जुन्योः पर्युह्यते ॥ १४ ॥ यदश्विना पृच्छमानावयातं, त्रिचक्रेण वहतु सूर्यायाः । विश्वे देवा अनु तद्वामऽजानन्, पुत्रः पितराववृणीत पुषा ॥ १५ ॥ यदयातं शुभस्पती वरेयं सूर्यामुप । कैकं चक्रं वामासीत्क देष्टाय तस्थथुः ॥ १६ ॥ ( व० ३ ) द्वे त चक्रे

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सूर्ये ब्रह्माण ऋतुथा विदुः । अथैकञ्चक्रे यद्गुहा त-
दद्धा ता य इद्विदुः ॥ १७ ॥ सूर्यायै देवेभ्यो मित्राय
वरुणाय च । ये भूतस्य प्रचेतस इदं तेभ्योऽकरं
नमः ॥ १८ ॥ पूर्वापरं चरतौ माययैतौ शिशू क्री-
डन्तौ परियातौ अध्वरम् । विश्वान्यन्यो भुवनाभिच-
ष्ट ऋतूनन्यो विदधज्जायते पुनः ॥ १९ ॥ नवो
नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् । भा-
गन्देवेभ्यो विदधात्यायन् प्रचन्द्रमा स्तिरते दीर्घमा-
युः ॥ २० ॥ सुकिंशुकं शल्मलिं विश्वरूपं हिरण्य-
वर्णं सुवृतं सुचक्रम् । आरुह सूर्ये अमृतस्य लोकं
स्योनं पत्ये वहतुं कृणवष्व ॥ २१ ॥ (व० ४) उदी-
र्ष्वातः पतिवती ह्येषा विश्वावसुर्नमसा गीर्भिरीळे ।
अन्यमिच्छ पितृषदं व्यक्तं स ते भागो जनुषा तस्य
विद्धि ॥ २२ ॥ उदीर्ष्वातो विश्वावसो नमसेळामहे त्वा ।
अन्यामिच्छ प्रफर्व्यं सञ्जायापत्या सृज ॥ २३ ॥ अ-
नृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

वरेयम् । समर्यमा सम्भगो नो निनीयात्सञ्जास्पत्यं स्वयममस्तु देवाः ॥ २४ ॥ प्र त्वा मुञ्चामि वरुणस्य पाशाद्येन त्वा बध्नात्सविता सुशेवः । ऋतस्य योनौ सुकृतस्य लोके रिष्टां त्वा सह पत्या दधामि ॥ २५ ॥ प्रेतो मुञ्चामि नामुतः सुबद्धाममुतस्करत् । यथेयमिन्द्र मीढ्वः सुपुत्रा सुभगा सती ॥ २६ ॥ [ वं० ५ ] पूषा त्वेतो नयतु हस्तं गृह्याश्विनौ त्वां प्रवहतां रथेन । गृहान्गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमा वदामि ॥ २७ ॥ इह प्रियं प्रजया ते समृद्ध्यतामस्मिन्गृहे गार्हपत्याय जागृहि । एना पत्या तन्वा संसृजस्वाथाजिव्री विदथमा वदाथः ॥ २८ ॥ नीललोहितं भवति कृत्या सक्तिर्व्यज्यते । एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बद्ध्यते ॥ २९ ॥ परा देहि शामुल्यं ब्रह्मभ्यो विभजा वसु । कृत्यैषा पद्धती भूत्वा जाया विशते पतिम् ॥ ३० ॥ अश्रीरातनूर्भवति रुशती पापयामुया । पतिर्यद्वध्वोवाससा स्वमङ्गमभिधि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

त्सते ॥ ३१ ॥ [ व० ६ ] ये वध्वश्चन्द्रं वहंतु यक्ष्मा-
यन्ति जनादनु । पुनस्तान्यज्ञिया देवा नयन्तु यत-
आगताः ॥ ३२ ॥ मा विदन्परिपन्थिनो य आसीदन्ति
दम्पती । सुगेभिर्दुर्गमऽतीतामऽपद्रवन्त्वऽरातयः ॥३३॥
सुमङ्गलीरियं वधूरिमां समेत पश्यत । सौभाग्यमस्यै
दत्वा यथाऽस्तं विपरेतन ॥ ३४ ॥ तृष्टमेतत्कटुकमेत-
दपाष्टवद्विषवन्नैतदत्तवे । सूर्यां यो ब्रह्म विद्यात्स इद्वा-
धूयमर्हति ॥ ३५ ॥ आशासनं विशासनमथो अधि
विकर्तनम् । सूर्यायाः पश्य रूपाणि तानि ब्रह्मा तु
शुन्धति ॥ ३६ ॥ [ व० ७ ] गृभ्णामि ते सौभगत्वाय
हस्तौ मया पत्या जरदष्टिर्यथासत् । भगो अर्यमा स-
विता पुरन्धिर्मह्यं त्वाऽदुर्गार्हस्पत्याय देवाः ॥ ३७ ॥
तां पूषं शिवतमामेरयस्व यस्यां बीजं मनुष्या वपन्ति ।
या न ऊरू उशती विश्रया ते यस्यामुशन्तः प्रहराम
शेपम् ॥ ३८ ॥ तुभ्यमग्रे पर्यवहत्सूर्यां वहतु ना स ह ।
पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥ ३९ ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

पुनः पत्नीमग्निरदादायुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवातु शरदः शतम् ॥ ४० ॥ सोमः प्रथमो विवेद गन्धर्वो विवेद उत्तरः । तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजः ॥ ४१ ॥ (व ८) सोमो ददद्गन्धर्वाय गन्धर्वोददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ ४२ ॥ इहैव स्तम्मा वियौष्टं विश्वमायुर्व्यश्नुतम् । क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥ ४३ ॥ आ नः प्रजां जनयतु प्रजापतिराजरसाय समनक्त्वर्यमा । अदुर्मङ्गलीः पतिलोकमाविवेश शन्नो भव द्विपदे शं चतुष्पदे ॥ ४४ ॥ अघोरचक्षुरपतिघ्न्येऽधिशिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे ॥ ४५ ॥ इमांत्वामिन्द्र मीढ्वः सुपुत्रां सुभगां कृणु । दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि ॥ ४ ॥ सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव । ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवृषु ॥ ४७ ॥ समञ्जतु विश्वदेवाः स-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मापो हृदयानि नौ । संमातरिश्वा सन्धाता सम्रुदेष्ट्री द-
धातु नौ ४८ ध्रुवोऽधिपुष्या मयि मह्यं त्वादाद्बृहस्प-
तिः । मया पत्या प्रजावती सञ्जीव शरदः शतम् ४९
च ९ ) विहिसेतोरसृक्षत नेन्द्रं देवमऽमंसत । यत्रास-
द्वृषाकपिरर्यः पुष्टेषु सत्सखा, विश्वस्मादिन्द्रउत्तरः ५०
नमो ब्रह्मणे० ३ इति सूर्यवर्गं पठित्वा ॥ कन्या पितु-
र्ब्राह्मणपूजनं । गायत्र्यै नमः ३ । अग्नेर्यविष्ठस्य, अ-
ः पुष्टिपतेः प्रजापतेः अर्यम्णः गन्धर्वस्य त्र्यम्बकस्य
कन्योद्वाहनिमित्तं ब्राह्मणपूजनमर्चामहं करिष्ये ॐ कु-
ष्व ॥ दक्षिणायै । आश्रावितमिति पूर्णां विमुच्य ।
ति उद्वाहः ॥ २ ॥ अथ वरस्य प्रायश्चित्तहोमः ॥
नः परिसमुह्य । पर्युक्ष्य । परिषिच्य ९ परिस्तीर्य
६ नास्ति निर्वापणं । अग्नये वायवे सूर्याय चन्द्रमसे
विष्णवे प्रायश्चित्तयागदेवताभ्यः अग्नये वैश्वानराय इद-
ाज्यमर्पयामि नमः ॥ आज्यभागान्तं । ॐ उलपरा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सौषधं सावसथं प्रतिपद्यते रोहिण्या मूलेन वा । य
पुण्योक्तमपरेणाग्निमानुडुहे रोहिते चर्मण्युपविश्याभि
दर्भेष्वेव जयप्रभृतिभिर्हुत्वा ॥ अग्निरैतु प्रथम इत्याद्या
पञ्चदशाहुतीः स्रुवेण जुहोति । अग्निरैतु प्रथमो दे
तानां सोऽस्याः प्रजां नयतु सर्वमायुः । तदऽयं रा
वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमऽघन्निरुन्ध्यात्स्वा
१ अग्निरिमां त्रायतां गार्हपत्यः सोऽस्याः प्रजां मुञ्च
मृत्युपाशात् । अरिक्तोपस्था जीवतामस्तु माता पौत्रम
नन्दमऽभि विबुध्यतामियं स्वाहा २ मा ते गृहे नि
घोर उत्थादऽन्यत्र त्वद्रुदत्यः संविशन्तु । जीवपुत्रा
तिलोके विराज पश्यन्ती प्रजां सुमनस्यमाना स्वाहा
मा ते कुमारः स्तनधः प्रमायि मा त्वं विकेशी
आवधिष्ठाः । स्तनन्धयं ते सविताभिरक्षत्वऽवासस
परिधानाद्बृहस्पतिः, विश्वेदेवा अभिरक्षन्तु नित्यं स्वा
हा ४ अग्ने! प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि य
ऽस्यां भृशा तनूस्ताऽमस्यां नाशय स्वाहा ॥ ५ ॥ भव

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

स-

प्रायश्चित्ते० ॥ ६ ॥ सूर्य प्रा० ॥ ७ ॥ चन्द्र प्रा० । ८ । विष्णो प्रा० ॥ ९ ॥ विष्णो प्रा० ॥ १० ॥ चन्द्र प्रा० ॥ ११ ॥ सूर्य प्रा० ॥ १२ ॥ वायो प्रा० ॥ १३ ॥ अग्ने प्रा० ॥ १४ ॥ त्र्यायुषं० ॥ १५ ॥ दधि क्राव्णो० इति त्रिर्दधि भक्षयित्वा ३ । मानवकायोत्सङ्गे । इळामग्ने इति ( अक्षोट १० ) फलानि प्रददाति ॥ ततः ये के च ज्मा इत्याज्यप्रधानम् । ऋतुतिथिः । वरस्य ब्राह्मणपूजनं । गायत्र्यै नमः ॥ ३ ॥ अद्य तावत अग्नेर्यविष्ठस्य अग्नेः वायोः सूर्यस्य चन्द्रस्य विष्णोः प्रायश्चित्तदेवतानां आत्मोद्वाहनिमित्तं ब्राह्मणपूजनमर्चामहं करिष्ये ॐ कुरुष्व । दक्षिणायै । आश्रावितमिति पूर्णा विमुच्य ।

अथ दायभक्तमानीय । पुनः परिसमूह्य पर्युक्ष्य परिषिच्य ९ चातुष्कोष्ठैः परिस्तीर्य । अन्नपात्रे इदं हविः० । अग्नये स्वाहा, प्रजापतये स्वाहा, इति हस्तेनाहुतिद्वयं हुत्वा । अग्निं विमुच्य । नयामि । धर्म देहि० । अन्नपात्रात्क्षेत्रेशबलिं दत्वा शेषं वधूवरौ प्राश्नीतः ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अन्नमेव विवननमन्नं संवननं स्मृतम् । अन्नं पशूनां प्राणं सद्ऽन्नं ज्येष्ठं भिषक्स्मृतम् १ अन्नमयेन मणिना प्राणसूत्रेण पृश्निना । सिनोमि सत्यग्रन्थिना हृदयं च मनश्च ते २ सह वाचा मनो अस्तु सहचित्तं सहव्रतम् चक्रमिवानुडुहः पदं मामेवान्वेतु ते मनः ३ मां चैव पश्य सूर्यं च मा चान्येषु मनः कृथाः । चाक्रवाकं संवननं मम चामुष्याश्च भूयादिति वरेण वध्वाः षष्ठ्यन्तं नाम ग्राह्यं । अमुकेत्युच्यमानामुक्यादेव्याः भूयादिति दधिघृतमिश्रं प्राश्नीतः ॥ इति दायभक्तविधिः ॥

॥ अथ मङ्गलपुष्पाणि क्षिपेत् ॥

ॐ संवत्सरं ब्रह्मचर्यं चरतो द्वादशरात्रीः षट्तिस्र एकां वाऽतः संविशतः ॥ अपश्यन्त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् । इह प्रजामिह रयिं रराणः प्रजायस्व प्रजया पुत्रकाम इति स्त्री ॥ १ ॥ अपश्यन्त्वा मनसा दीध्यानां स्वीयां तनूं ऋत्व्ये नादमानाम् तपसा स्वच्छा युवतिर्बभूयाः प्रजायस्व प्रजया पुत्रका

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मे इति पतिः ॥ २ ॥ प्रजापते तनुं मे जुषस्व त्वष्टन्देवेभिः सह मा न इन्द्र । विश्वैर्देवैर्यज्ञियैः संविदानः पुंसां बहूनां मातरः स्याम ॥ ३ ॥ अहं गर्भमादधाम्योषधीष्वऽहं विश्वेषु भुवनेष्वन्तः । अहं प्रजा अजनयन्पृथिव्यामहं जनिभ्यो अवरीषु पुत्रान् ॥ ४ ॥ इति स्त्र्यादिव्यत्यासं जपत एवमेवं तौ प्रजाकामौ संविशतः । करदिति भसदमभिमृशति, भसदित्युपरिजननं बृहदितिजातं वयोल्पबह्वपेक्षया वध्वा ब्रह्मचर्यविधिः ॥

ज्योत्कारं क्रमते चैव स्वास्तिना परिपठ्यते । ब्राह्मणैराशिषाः कार्या विष्णुर्वचनमब्रवीत् ॥ १ ॥ विष्णुर्वा त्रिपुरान्तको भवतु वा ब्रह्मा सुरेन्द्रोथवा भानुर्वा शशलक्ष्मणोथ भगवान्बुधोथ सिद्धोथवा । रागद्वेषविषार्तिमोहरहितः सन्तानकल्पद्रुमो यः सर्वैः सहसंस्कृतो गुणगणैस्तस्मै नमः सर्वदा ॥ २ ॥ प्रसन्नमूर्तिः स्थिरमन्त्रविग्रहः समग्रशक्तिर्जगदेकबान्धवः । उमापतिः खण्डशशाङ्कशेखरो जयत्यमायातिहरो महेश्वरः ॥ ३ ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

गायत्री ब्रह्मणो यद्वल्लक्ष्मीर्दैत्यरिपोर्यथा । उमा यथा
महेशस्य तथा त्वं भव भर्तरि ॥ ४ ॥ सुवर्चला य-
थार्कस्य यथा चन्द्रस्य रोहिणी । मदनस्य रतिर्यद्वत्त-
था० ॥ ५ ॥ सुदक्षिणा दिलीपस्य वसन्तस्य धृति-
र्यथा । अरुन्धती वसिष्ठस्य तथा० ॥ ६ ॥ रामस्य
च यथा सीता विनता कश्यपस्य च । पावकस्य यथा
स्वाहा तथा० ॥ ७ ॥ उषा यथाऽनिरुद्धस्य दमयन्ती
नलस्य च । सती च ऋतुपर्णस्य तथा० ॥ ८ ॥
यथा गौरी महेशस्य यथा स्वर्गपतेः शची । यथा श्रीः
श्रीधरस्यैव तथा० ॥ ९ ॥ पुलोमजा यथेन्द्रस्य य-
थागस्त्यस्य धर्मिणी । देवकी वसुदेवस्य तथा० ॥ १०
शन्तनोश्च यथा गङ्गा सुभद्रा ह्यर्जुनस्य च । धृतराष्ट्र-
स्य गान्धारी तथा० ॥ ११ ॥ यथेन्द्राणी हरिहरे
स्वाहा चैव विभावसौ । रोहिणी च यथा चन्द्रे दम
यन्ती यथा नले ॥ १२ ॥ यथा वैश्रवणे भद्रा व
CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri
सिष्ठे वाप्यरुन्धती । यथा नारायणे लक्ष्मीस्तथा०

॥ १३ ॥ अहीनां मालिकां विभ्रत्तथा पीताम्बरं वपुः । हरो हरिश्च दम्पत्योर्वां करोतु सुमङ्गलम् ॥ १४ ॥ लीलया कुण्डलीकृत्य धारयन्भुजगं हरः । देयाद्देवो वराहश्च स वामभ्यधिकां श्रियम् ॥ १५ ॥ जीवसूर्वीरसूर्भद्रे सर्वसौख्यसमन्विता । सुभगा भोगसम्पन्ना यज्ञपत्नी स्वनुव्रता ॥ १६ ॥ अतिथीनागतान्साधून्बालान्वृद्धान्गुरूंस्तथा । पूजयन्त्या यथान्यायं शश्वद्गच्छन्तु ते समाः ॥ १७ ॥ पृथिव्यां यानि रत्नानि गुणवन्ति गुणानि च । तान्याप्नुहि त्वं कल्याणि सुखिनी शरदः शतम् ॥ १८ ॥ धनपुत्रवती साध्वी सततं भर्तृवल्लभा । मनोज्ञा ज्ञानसहिता तिष्ठ त्वं शरदः शतम् ॥ १९ ॥ लक्ष्मीर्यथा सकलदेवगणाशिरत्रोगौरी यथा पशुपतौ च शची सुरेन्द्रे । गायत्र्यपीह परमेष्ठिनि नित्यरक्ता तद्वद्भव त्वमपि भर्तरि नित्यरक्ता ॥ २० ॥ सा रोहिणी पतिव्रता च यथा शशाङ्के नित्यं यमान्यपि यमे च यथानुरक्ता । स्वाहा यथा

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

हुतभुजे च्यवने सुकन्या तद्वद्व० ॥ २१ ॥ सी
यथा दशरथस्य सुते प्रवीरे प्रीतिर्यथा मुनिवरे च
तिश्च कामे । सूर्येऽनुरक्तहृदया च सुवर्चला स्यात्तद्वद्व
॥ २२ ॥ वाणाख्यदैत्यतनया च यथाऽनिरुद्धे यद्वन्नले नृ
पवरे दमयन्त्यनन्या । हंसावली नृपसुता कमलाक्ष
वा तद्वद्व० ॥ २३ ॥ सुदक्षिणा चापि नृपे दिली
ह्यरुन्धती चापि मुनौ वसिष्ठे । गाढानुरक्ता भवती
यद्वत्तद्वद्व० ॥ २४ ॥ यद्वन्नृपे दशरथे च कुसल्यक
न्या मन्दोदरी दशमुखेऽसुरसंघमुख्ये । अत्रौ यथा स
कलधर्मरताऽनसूया तद्वद्व० ॥ २५ ॥ यद्वल्लक्ष्मीर्मधुस
दनयोः पत्रिणोश्चक्रनाम्नोर्यद्वन्नित्यं रजनिशशिनोः प
द्मिनीसूर्ययोश्च । गाढप्रेम्णोर्भवति शिवयोः सुप्रसन्नं
स्वान्तं जायापत्योर्भवतु भवतोस्तद्वदेव त्रिलोके ॥ २६
अतिरमणीयाकृत्योः समवयसोः प्रोल्लसत्प्रेम्णोः । व
धूवरयोर्नूनं पाणिग्रहणं भवतोः शिवायास्तु ॥ २७

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

योरमर्त्यतटिनीकल्लोलिनीनाथयोः । पौलोमीपुरुहूतयो र-
ति रतिप्राणेशयोः प्रेमवान्दम्पत्योर्युवयोश्चिरं भवतु त-
त्सौभाग्यभाग्योदयः ॥ २८ ॥ यन्मङ्गलं शैलसुताविं-
वाहे हरस्य दत्तं कमलासनेन । तन्मङ्गलं तेऽद्य विवाह-
काले ददामि वै देवमुनिप्रणीतम् ॥ २९ ॥ अक्षतौष-
धितिलाश्च शाद्वला धूपदीपकुसुमानि चन्दनम् । मा-
त्तिकं दधि सशर्करं पयो मङ्गलं दधतु वोऽभिषेकजम्
॥ ३० ॥ धातृकेशवशिवाः सुपूजिताः षण्मुखोऽथ म-
दनो विनायकः । अश्विनौ धनपतिर्विभावसुर्मङ्गलं० ॥
३१ ॥ शक्रवह्नियमपाशिनैर्ऋतिवायुयक्षपतिशम्भुपद्मजाः ।
विष्णुना सह दिशामिनास्त्वमी मङ्गलं० ॥ ३२ ॥ अत्रिक-
श्यपवसिष्ठगौतमा व्यासगालवपुलस्त्यकौशिकाः । गाधि-
नन्दनकणादशौनका मङ्गलं० ॥ ३३ ॥ मेषगोमिथुन-
कर्कटास्तथा सिंहकन्यतुलकीटधान्विनः । मार्गकुम्भज-
लजास्तु राशयो मङ्गलं० ॥ ३४ ॥ सूर्यसोमकुजचन्द्र-
CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri
नन्दना जीवशुक्रशनिराहुकेतवः । भुवकुम्भजयुता म-

हाग्रहा मङ्गलं० ॥ ३५ ॥ मार्गपौषमधुराधफाल्गुणा माघशुक्लशुचिभाद्रश्रावणाः । आश्वियुग्बहुलकाश्च मासका मङ्गलं० ॥ ३६ ॥ इक्षुसैन्धवदुग्धसुरार्णवाः क्षीरस्वादुदधिसिन्धवस्तथा । निम्नगानुगमिता महार्णवा मङ्गलं० ॥ ३७ ॥ शेषतक्षकमलाहिवासुकिः शङ्खपालफणिपद्मपुष्कराः । मानसो विमलशम्भुनैमिषा मङ्गलं० ॥ ३८ ॥ मेरुमन्दिरहिमाद्रिरैवता विन्ध्यसह्यमलयाद्रिदुर्दुराः । गन्धमादनशिवालया अमी मङ्गलं० ॥ ३९ ॥ तार्क्ष्यजैमनिजटायुजम्पुलाश्चित्रसेनद्विजहंसदुर्दुराः । सम्पतित्रिदशवायसोऽरुणा मङ्गलं० ॥ ४० ॥ रामलक्ष्मणदिलीपभार्गवाः सत्यकेतुनलभीष्मपाण्डवाः । धर्मदत्तशिविवैन्यभूमिपा मङ्गलं० ॥ ४१ ॥ जानकी सह सुतैररुन्धती मालती शशिमती सुदक्षिणा । द्रौपदी च दमयन्त्यथोर्मिला मङ्गलं ॥ ४२ ॥ जाह्नवी शशिभवा शरावती नर्मदा च यमुना विपाशिका । गण्डकी मधुमती सरस्वती मङ्गलं० ॥ ४३ ॥ पार्व-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ती च कमला शची रतिः सत्यवत्यपि सरोहिणी ह्युषा । कौशिकी च विनता च देवकी मङ्गलं दध० ॥ ४४ ॥ रावणश्च वलिदानवो मयः कालकूटदहनो विभीषणः । बाणकंसयवना महासुरा मङ्गलं दध० ॥ ४५ ॥ सूर्येन्दुराशितिथियोगमुनीन्द्रतारा लोकेशभूतवसुनागनगाः समुद्राः । विद्याधराप्सरसश्चादिगणाः सदैव कुर्वन्तु वां सुमुदिताः प्रथमाभिषेकम् ॥ ४६ ॥ स्वर्धेनुर्वृषभोहरिः सुरवधूरम्भा च कल्पद्रुमो नक्षत्रं तिथिवासराः क्षणमथो लग्नं मुहूर्तं शुभम् । खं वायुः शशिभास्करौ च धरणिस्तोयं च वह्निः पुमानित्येवं परमेश्वरप्रकृतयः कुर्वन्तु वां मङ्गलम् ॥ ४७ ॥ ये शृण्वन्त्यथवा स्तुवन्ति विमलं मन्त्रं महामङ्गलं तीर्थे यज्ञविधौ विवाहसमये राज्याभिषेके पथि । सन्तुष्टाः शुभकांक्षिणस्त्रिदिवपास्तेषाममी दैवता नूनं यत्र भवन्ति कर्म कुशलं ते प्राप्नुवन्त्यद्भुतम् ॥ ४८ ॥ आदित्योऽग्नियुतो विधुः सवरुणो भौमः कुमारान्वितः

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सौम्यो विष्णुयुतो गुरुः समघवा वाणीयुतो भार्गवः ।
सब्रह्मा रविजो गणेश्वरयुतो राहुः सरुद्रः शिखी म-
ङ्गल्यं ददतो हरार्चनरताः कुर्वन्तु वां मङ्गलम् ॥ ४९ ॥
यावद्द्वीपे तरङ्गान्वहति सुरनदी जाह्नवी पुण्यतोया या-
वदाकाशमार्गे तपति दिनकरो भास्करो लोकपालः ।
यावद्ब्रह्मा च विष्णुः सुरपतिसहितो वर्तते मेरुशृङ्गे
तावत्त्वं भूमिनिष्ठो धनसुतसहितो भुङ्क्ष्व पथ्यां सुलक्ष्मीम्
॥ ५० ॥ यावच्चन्द्रार्कतारा भ्रमयति गगने कालमूर्ति-
श्च विष्णुर्यावत्कैलासमेरुहिमगिरिगिरिजा यान्ति नद्यः
समुद्रम् । यावत्कल्पान्तकालं दनुजसुरगणा भूर्भुवः
स्वश्च यावत्तावत्त्वं भूमिनिष्ठो धनसुतसहितो भुङ्क्ष्व पथ्यां
सुलक्ष्मीम् ॥ ५१ ॥ यावन्मेरुर्विशालो हिमगिरिमल-
यौ सह्यगोवर्धनौ च यावद्भूमौ स्रवन्तीगणयुतजलधिः
स्थीयते देवपूज्यः । यावद्रामात्सुकीर्तिर्भुवि जनमुखगा
भारती चापि पुण्या तावत्त्वं भूमिनिष्ठो धनसुतसहितो
भुङ्क्ष्व पथ्यां सुलक्ष्मीम् ॥ ५२ ॥ लक्ष्मीः कौस्तुभपा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

रिजातकतरू धान्वन्तरिश्चन्द्रमा धेनुः कामदुघा सुरा सुरगजो रम्भा च देवाङ्गना । अश्वः सप्तमुखस्तथा हरिधनुः शङ्खं विषं चामृतं रत्नानीति चतुर्दश प्रतिदिनं कुर्वन्तु वां मङ्गलम् ॥ ५३ ॥ यावत्तोयधराधराधरधराधाराधरा भूधरा यावच्चारुविचारुचारुचमरं चामीकरं चामरम् । यावद्रामविरामरामरमणं रामायणं श्रेयसे तावद्भोगविभोगभोगभवनं भोगायनं त्वं भव ॥ ५४ ॥ आयुर्वर्षशतं शतं तपशतं वाराङ्गनानां शतं कम्बोजाश्वशतं शतं शतगुणैर्मत्तङ्गजानां शतम् । छत्रं पूर्णघटाभिषेकसहितं दासीजनाना शतं जीव त्वं सकलत्रपुत्रसहितो मन्वन्तराणां शतम् ॥ ५५ ॥ आयुष्मान्भव पुत्रवान्भव भव श्रीमान्यशस्वी भव प्रज्ञावान्भव भूरिभूतिकरणैर्दानैः कनिष्ठो भव । तेजस्वी भव वैरिदर्पदलनव्यापारदक्षो भव श्रीशम्भोर्भव पादपूजनरतः सर्वोपकारी भव ॥ ५६ ॥ आयुर्द्रोणसुते श्रियो दशरथे शत्रुक्षयं राघवे ऐश्वर्यं नहुषे गतिश्च पवने मा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नं च दुर्योधने ! शौर्यं शान्तनवे बलं हलधरे सत्यं च कुन्तीसुते विज्ञानं विदुरे भवन्तु भवतः कीर्तिश्च नारायणे ॥ ५७ ॥ आयुर्बलं विपुलमस्तु सुखितमस्तु सौभाग्यमस्तु विपदा तव कीर्तिरस्तु । श्रीरस्तु धर्ममतिरस्तु रिपुक्षयोस्तु सन्तानवृद्धिरभिवाञ्छितसिद्धिरस्तु ॥ ५८ ॥ दीर्घायुर्भव जीव वत्सरशतं नश्यन्तु सर्वापदः स्वास्थ्यं संभज चञ्चलां त्यज मतिं लक्ष्म्येकनाथो भव । किं ब्रूमो भृगुगौतमात्रिकपिलव्यासादिभिर्भाषितं यद्रामस्य पुराऽभिषेकसमये तच्चास्तु ते मङ्गलम् ॥ ५९ ॥ सुपुण्याहं सुनक्षत्रं सुलग्नं च सुमङ्गलम् । अस्मिन्विवाहकाले तु देयाद्गणपतिस्तु वाम् । ६० । यावदिन्द्रादयो देवा यावच्चन्द्रदिवाकरौ । तावत्त्वं तिष्ठ स्थानेऽस्मिन्स्वर्वृतः सहसम्पदा ॥ ६१ ॥ आयुश्च विद्यां च धनं सुखं ते धर्मार्थकामं बहुपुत्रलाभम् । शत्रुक्षयं राजसुपूज्यतां च तुष्टा ग्रहाः सर्वकामान्दिश्यन्तु ॥ ६२ ॥ सुरार्चनेन दानेन साधूनां सङ्गमेण

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

च । आशीर्वादेन विप्राणां जीव त्वं शरदः शतम् ॥ ६३ ॥ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रूणां बुद्धिनाशोस्तु मित्राणामुदयस्तव ॥ ६४ ॥ मार्कण्डेयमुनेः स्वर्गवैद्ययोः स्वर्पतेः समम् । आयुरारोग्यमैश्वर्यमेतत्त्रितयमस्तु ते ॥ ६५ ॥ जीव त्वं शरदः शतम् ॥ कलशपृच्छां सम्पाद्य । गायत्र्यै नमः ३ । अद्य तावत् महागणपतेः । अग्नेः पुष्टिपतेः प्रजापतेः १ अर्यम्णः गन्धर्वस्य त्र्यम्बकस्य विवाहोद्वाहदेवतानां २ अग्नेः वायोः सूर्यस्य चन्द्रमसः विष्णोः प्रायश्चित्तयागदेवतानां ३ मेषादीनां द्वादशराशीनां अश्विन्यादीनां सप्तविंशतिनक्षत्राणां वासुदेवस्य० इन्द्रादीनां दशदिक्पालानां० आत्मोद्वाहनिमित्तं कन्योद्वाहनिमित्तं कलशंपूजनं ग्रहमण्डलपूजनं दिक्पालपूजनमच्छिद्रं सम्पूर्णमस्तु ॥ आपन्नोस्मि० कल्निक्कलुष० आह्वानं । उदकलशं० इति विवाहविधिः

पनये

वाहे

॥ समाप्तः ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

॥ ओ ३ म् ॥

# अथोपनयनविधिः

—०-:-※-:-०—

संस्काराणामाऽनुपूर्व्यं वक्ष्ये लौगाक्षिभाषितम् । यथोक्तकर्महोमानां यथाकालं यथाक्रमम् ॥ ऋतौ चतुर्थ्यां स्नातायां प्राजापत्यं चरुं श्रपेत् । निश्चये बीजवापस्य गृह्यसूत्रे विधिः स्मृतः ॥ सीमन्तश्च यथाकालं कार्यं पुंसवनं ततः । जातकर्म नामकर्म दर्शनं सूर्यचन्द्रयोः ॥ अन्नप्राशनहोमोऽथ चोडोपायनमेव च । ऋतुनक्षत्रयागात्प्राग्भैक्षस्याचरणं विदुः ॥ व्याख्यानं ब्रह्मचर्यस्य होमे सम्पादिते भवेत् । शौचाशिक्ष[illegible] न्दि-
न्ध्योपास्तिर्मन्त्राणामुपदेशनम् ॥ तथाऽग्नीन्धनमन्त्राणां [illegible]
तो भैक्षस्य भोजनम् । तिष्ठन्तं तदहःशेषं [illegible]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ब्रह्मचारिणाम् ॥ सन्ध्योपास्त्याग्निकार्यं च भैक्षचर्या त-
तोऽन्वहम् । त्रैविद्यकं यथाकालमुपाकर्म यथोदितम् ॥
चातुर्होत्रिकहोमौ द्वावाऽऽरण्यानि व्रतान्यऽथ । गो-
दानहोमस्त्रैविद्यापवर्गोऽपि ततः स्मृतः ॥ यथाकाल-
मऽध्ययनमुत्सर्जनविधिस्ततः । प्रास्याग्नौ दण्डमजिनं
मेखलां चाप्सु निक्षिपेत् ॥ मधुपर्कस्ततो देय आचा-
र्याय यथाविधिः । स्नानव्रते स्नातकाय मधुपर्कं प्र-
दापयेत् ॥ एकादशानुवाकेन ततः स्यादऽनुशासनम् ।
स्नातस्य स्वस्तिपुण्यत्वाद्धोमोऽथ स्यात्त्रिकादिभिः ॥
पुत्रं पिताऽर्हयेत्तत्र स्वस्तिपुण्येष्वऽतः परम् । मधुपर्क-
विधेरन्ते विद्यातीर्थव्रतादिकम् । सर्वं कुर्याद्विधानेन त-
तो गृहसमाश्रयः ॥ अनेन क्रमयोगेन यथाकालं द्वि-
जन्मनाम् । कार्यः शरीरसंस्कारः पावनः शुभकर्मकृत् ॥
न निर्वापश्च सीमन्ते जातकर्मणि वै तथा । चूडोपा-
यनयोस्तद्वत्त्रैविद्यकव्रतद्वये । उपाकर्मणि गोदाने वि-
वाहे प्रायश्चित्तके ॥ चतुर्गृहीत्वा प्रधानान्यथाकर्म समाच-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

रेत् । सकृत्संस्कृतसंस्कारः सीमन्तेन द्विजः स्त्रियाः । यं यं गर्भं प्रसूयते स सर्वः संस्कृतो भवेत् ॥ अनेकदेवतायागे त्वेक एव चरुः श्रपेत् । ऋते पुंसवनादृग्ये लौगाद्विवचनं यथा ॥ मौंजीवन्धे रक्तश्वेते मण्डले सूर्यचन्द्रयोः । वर्तुले नवरेखाढ्ये वितस्तिसंमिते यजेत् । केशान्तिको ब्रह्मणस्य दण्डः कार्यः प्रमाणतः । ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ॥ नाङ्गुष्ठादधिका कार्या समित्स्थूला तथा क्वचित् । उपवीतं वटोरेकं द्वे तदितरयोः स्मृते ॥ ओंकारं पूर्वमुच्चार्य व्याहृतीस्तदनन्तरम् । सावित्री प्रणवश्चान्ते जप एवमुदाहृतमिति ।

श्रीमहागायत्र्यै नमः, सावित्र्यै नमः, सरस्वत्यै नमः, स्वस्ति प्रजाभ्यः । आदावश्मचूर्णेन ग्रहमण्डलं तद्वत् ऊर्ध्वाधश्चन्द्रसूर्ययोर्नवरेखायुते द्वादशांगुलमिते श्वेतरक्ते वर्तुले मण्डले चोल्लिख्य ॥ ओंकारो यस्य मूलमित्यादि । वषट्ते विष्णा तावत् । ततः कलशे प्रधानानि ओं प्रजापते नहि त्वदन्य एता विश्वा जातानि परिता

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतेया रयीणां नमः ॥ १ ॥ ये के च ज्मा महिनो अहिमाया दिवो जज्ञिरे अपां सधस्थे । ते अस्मभ्यमिषये विश्वमायुः क्षपा उस्रा वरिवस्यन्तु देवा नमः ॥ २ ॥ अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् । अतूर्थं श्रावयत्पतिं पुत्रं ददाति दाशुषे नमः ॥ इन्द्र क्षत्रमऽभि वाममोजोऽजायथा वृषभश्चर्षणीनाम् । अपानुदोजनमऽमित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकं नमः ॥ प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठः । यस्योरुषु त्रिषु विक्रमणेष्वऽधि क्षियन्ति भुवनानि विश्वा नमः ॥ ३ ॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम नमः संवत्सरस्य प्रतिमां ये त्वा रात्रिमुपासते । तेषामायुष्मतीं प्रजां रायस्पोषेण संसृज नमः ॥ काय नमः । कस्मै नमः । कतमस्मै नमः । प्रजापतये नमः । प्र-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

जापते इति द्वाभ्याम् । प्रजापते नहि त्वदन्य एता विश्वा जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु नमः ॥ असावमुष्य पुत्रोऽमुष्याऽसौ पुत्रो वयं स्याम पतयो रयाणां नमः ॥ देवदत्तो यज्ञदत्तस्य पुत्रो यज्ञदत्तस्य देवदत्तः पुत्रो वयं स्याम पतयो रयीणां नमः ॥ ४ ॥ कया नश्चित्र आभूवदूती सदा वृधः सखा । कया शचिष्ठया वृता नमः ॥ कस्त्वा सत्यो मदनां मँहिष्ठो मत्सदन्धसा । दृढा चिदाऽरुजे वसु नमः ॥ कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहुः काचिदृष्वः । पुरु दाशुषे विचयिष्ठो अंहोथा दधाति द्रविणं जनित्रे नमः ॥ प्रजापतये नमः । प्रजापते इति द्वाभ्याम् । प्रजापते नहि त्वदन्य इत्यादि नमः । [असावमुष्येत्यादि नमः] देवदत्तो यज्ञदत्तस्य पुत्रो यज्ञदत्तस्य देवदत्तः पुत्रो वयं स्याम पतयो रयीणां नमः ॥ ५ ॥ मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् । मित्रः कृष्टीरनिमिषाऽभि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

चष्टे मित्राय हव्यं घृतवद्विधेम नमः ॥ प्र स मित्र मर्तो अस्तु प्रयस्वान्यस्त आदित्य शिक्षति व्रतेन । न हन्यते न जीयते त्वतोनैनमंहो अश्नोत्यऽन्तितो न दूरात् नमः ॥ ६ ॥ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवाऽऽवाजस्य सङ्गथे नमः ॥ सं ते पयांसि समयन्तु वाजः सं वृष्ण्यान्यऽभिमातिषाहः । आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व नमः ॥ ७ ॥ अन्नपते अन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्रदातारं तारिषं ऊर्जं नो देहि द्विपदे चतुष्पदे नमः ॥ ८ ॥ ये के च ज्मा इत्यादि नमः ॥ ९ ॥ मेधां मह्यमङ्गिरसो मेधां सप्तर्षयो ददुः । मेधामग्निश्च वायुश्च मेधां धाता दधातु मे नमः ॥ मेधां मे वरुणो राजा मेधामग्निर्ददातु मे । मेधामिन्द्रश्च सूर्यश्च मेधां देवी सरस्वती नमः ॥ या मेधा अप्सरस्सु गन्धर्वेषु च यन्मनः । दैवी मानुषी या मेधा सा मामाविशतादिह नमः ॥ शरीरं मे विचर्षणं वाङ्मे मधु

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

महुहे । निशामितं निशामये मयि श्रुतं नमः ॥ य-
न्मेऽनूक्तं तद्रमतां शकेयं यदनुब्रुवे प्रियाः श्रुतस्य भ-
यासं मेधया संविधीमहि अवृधमहमवृधस्त्वमसौ सौम्य
प्राणास्त्वं मे गोपाय ब्रह्मणस्तदणी स्थ श्रुतं मे मा प्र-
हासीत् नमः ॥ छन्दोभ्यः नमः । उपायनाय नमः ।
ये के च ज्मा ॥ १० ॥ ये के च ज्मा । छन्दोभ्यः
नमः । त्रैविद्यकाय नमः ॥ ११ ॥ अप्त्रा नामासि
तस्यास्ते जोष्ट्रीयं गमेयमहमिद्धमिद्धमेधः परिमेधामृतस्य
जगृभ अहं सूर्य इवाजनि नमः ॥ रन्तिर्नामासि त-
स्यास्ते जोष्ट्रीयं गमेयमहमिद्धमिद्धमेधः परिमेधामृतस्य
जगृभ अहं सूर्य इवाजनि नमः ॥ युक्तिर्नामासि त-
स्यास्ते जोष्ट्रीयं गमेयमहमिद्धमिद्धमेधः परिमेधामृतस्य
जगृभ अहं सूर्य इवाजनि नमः ॥ योगोनामासि तस्यते
जोष्ट्रीयं गमेयमहमिद्धमिद्धमेधः परिमेधामृतस्य जगृभ
अहं सूर्य इवाजनि नमः ॥ युजे नमः । उद्युजे नमः ।
युक्त्यै नमः । योगाय नमः । उपाकरणदेवताभ्यः

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नमः ॥ १२ ॥ चितिः स्रुक्चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतो अग्निर्विज्ञातमग्निर्वाचस्पतिर्होता मन उपवक्ता प्राणो हविः सामाऽध्वर्युरिन्द्रं गच्छ नमः ॥ पृथिवी होता द्यौरध्वर्युस्त्वष्टाग्निर्मित्र उपवक्ता वाचस्पते वाचो वीर्येण सम्भृततमेन यक्ष्यसे यज्ञपतये वार्यमाऽऽस्वस्करो वाचस्पतिः सोमं पिबतु जजनदिन्द्रमिन्द्रियाय नमः सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः श्रातस्त इन्द्र सोम वातापे हवनश्रुतः नमः ॥ अग्निर्होता वातोध्वर्युरुद्रोग्निर्बृहस्पतिरुपवक्ता वाचस्पते हृद्विधे नामन्वाचस्पतिः सोममपादस्मासु नृम्णां धाः नमः सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः श्रातस्त इन्द्र सोम वातापे हवनश्रुतः नमः ॥ वाग्घोतावातोध्वर्युर्दीक्षा पत्न्यापोऽभिगरो मनो हविस्तपसि जुहोमि वाचस्पते च्छिद्रया वाचाऽच्छिद्रया जुह्वा दिवि देवासमृद्धोत्रा मैरयस्व नमः ॥ महाहविर्होता सत्यहविरध्वर्युरचित्तपाजा अग्निदऽचित्तमन उपवक्तानाधृष्य-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

श्चाप्रतिधृष्यश्चाभिगरा आयास्य उद्गाता वाचस्पते विधे नामन्विधेम ते नामविधेस्त्वमस्माकं नाम मा देवानां तन्तु च्छेदि मा मनुष्याणां नमः ॥ छन्दोभ्यः नमः । चातुर्होतृकाय नमः ॥ १३ ॥ [पुनः] चितिः स्रुक्० पृथिवी होता० ॥ अग्निर्होता० ॥ वाग्घोता० ॥ महाहविर्होता० ॥ छन्दोभ्यः नमः । अपवर्गे चातुर्होतृकाय नमः ॥ १४ ॥ ब्रह्मणे नमः । प्रजापतये नमः । घर्माय सम्राजे नमः । सूर्याय विभ्राजे नमः । देवेभ्यो घर्मपेभ्यो नमः । पितृभ्यो घर्मपेभ्यो नमः । छन्दोभ्यो नमः । प्रवर्ग्यव्रताय नमः ॥ १५ ॥ ब्रह्मणे नमः । प्रजापतये नमः । घर्माय सम्राजे नमः । सूर्याय विभ्राजे नमः । देवेभ्यो घर्मपेभ्यो नमः । पितृभ्यो घर्मपेभ्यो नमः । छन्दोभ्यो नमः । अपवर्गे प्रवर्ग्यव्रताय नमः ॥ १६ ॥ अग्नये नमः । वायवे नमः । सूर्याय नमः । ब्रह्मणे नमः । प्रजापतये नमः । संवत्सराय नमः । ऋतुभ्यो नमः । अ-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

णेभ्यः काण्वर्षिभ्यो नमः । छन्दोभ्यो नमः । अरु-
णव्रताय नमः ॥ १७ ॥ अग्नये नमः । वायवे नमः ।
सूर्याय नमः । ब्रह्मणे नमः । प्रजापतये नमः । सं-
वत्सराय नमः । ऋतुभ्यो नमः । अरुणेभ्यः काण्व-
र्षिभ्यो नमः । छन्दोभ्यो नमः । अपवर्गे अरुणव्र-
ताय नमः ॥ १८ ॥ अग्नये नमः । वायवे नमः ।
सूर्याय नमः । ब्रह्मणे नमः । प्रजापतये नमः । छ-
न्दोभ्यो नमः । ऋषिभ्यो नमः । छन्दोभ्यो नमः ।
औपनिषदव्रताय नमः ॥ १९ ॥ आवहन्ती वितन्वाना
कुर्वाणा वरमात्मनः । वासांसि मम गावश्चत्युन्नपानेन
वर्धय नमः ॥ सुवर्णां हरिणीं लक्ष्मीं धनदामश्वपू-
जिताम् । ततो मे श्रियमावह लोमशां पशुभिः सह
नमः ॥ २० ॥ आ मा यन्तु ब्रह्मचारिणो नमः ।
सं मा यन्तु ब्रह्मचारिणो नमः । तपो यशोयशानि
नमः । जनो यशोयशानि नमः । श्रेयान्वसो यशो

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यशानि नमः । तं त्वा भग प्रविशामि नमः । स

मा भग प्रविशामि नमः । अस्मिन्सहस्रशाखे अरण्य-
महं त्वयि मृजे नमः ॥ २१ ॥ अग्नये नमः वायवे
नमः । सूर्याय नमः । ब्रह्मणे नमः प्रजापतये नमः ।
छन्दोभ्यो नमः । ऋषिभ्यो नमः । छन्दोभ्यो नमः ।
अपवर्गे औपनिषदव्रताय नमः ॥ २२ ॥ ये के च
ज्मा० । गोदानव्रतदेवताभ्यो नमः ॥ २३ ॥ ये के
च ज्मा० । छन्दोभ्यो नमः । अपवर्गे त्रैविद्यकव्रत-
देवताभ्यो नमः ॥ २४ ॥ स्नातकव्रतदेवताभ्यो नमः ।
मौञ्जीबन्धनयागदेवताभ्यो नमः । तद्विष्णोः० । वा-
सुदेवाय० । विष्णुपञ्चायतनदेवताभ्यो नमः ॥ इन्द्रः
पर्वता बृहतारथेन० । ऐन्द्राग्नं तावत् ॥ सावित्राणि
सावित्रस्य देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पू-
ष्णो हस्ताभ्यामाददे । महागणपतये कुमाराय श्रियै
सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वारदेवताभ्यः । प्रजापतये
ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चा-
तुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय । " मार्ग-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

शीर्षे" रुक्मिणीसहिताय कृष्णाय श्रीसहिताय केशवाय । "पौषे" प्रियासहि० अनन्ताय, वागीश्वरीस० नारायणाय । "माघे" प्रीतिसहि० अच्युताय, कान्तास० माधवाय । "फाल्गुणे" शक्तिस० चक्रिणे, क्रियास० गोविन्दाय । "चैत्रे" सिद्धिस० वैकुण्ठाय, मतिस० विष्णवे । "वैशाखे" शोभास० जनार्दनाय, विभूतिस० मधुसूदनाय । "ज्यैष्ठे" महिमास० उपेन्द्राय, इच्छास० त्रिविक्रमाय । "आषाढे" लक्ष्मीस० यज्ञपुरुषाय, धृतिस० वामनाय । "श्रावणे" कान्तिस० वासुदेवाय, रतिस० श्रीधराय। "भाद्रपदे" प्राप्तिस० हरये, मायास० हृषीकेशाय । "आश्वयुजे" प्राकाम्यास० योगीश्वराय धीस० पद्मनाभाय । "कार्तिके" लघिमास० पुण्डरीकाक्षाय, गरिमास० दामोदराय । "मलिम्लुचे" शक्तिस० योगीश्वराय, सत्यभामास० नरकारये । निष्कलास० महामार्ताण्डाय ॥ दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरु-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

षाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः । प्रजापतये । सीमन्तकरणदेवताभ्यः । अग्नये इन्द्राय विष्णवे पुंसवनदेवताभ्यः । जातकरणदेवताभ्यः । काय प्रजापतये नामकरणदेवताभ्यः । मित्राय । सोमाय । अन्नपतये । चूडाकरणदेवताभ्यः । मेधायै सरस्वत्यै छन्दोभ्यः उपायनदेवताभ्यः । छन्दोभ्यः त्रैविद्यकव्रतदेवताभ्यः । उपाकरणदेवताभ्यः । छन्दोभ्यः चातुर्होतृकव्रतदेवताभ्यः । छन्दोभ्यः अपवर्गे चातुर्होतृकव्रतदेवताभ्यः ब्रह्मणे प्रजापतये घर्माय सम्राजे सूर्याय विभ्राजे देवेभ्यो घर्मपेभ्यः पितृभ्यो घर्मपेभ्यः छन्दोभ्यः प्रवर्ग्यव्रताय । ब्रह्मणे प्रजापतये घर्माय सम्राजे सूर्याय विभ्राजे देवेभ्यो घर्मपेभ्यः पितृभ्यो घर्मपेभ्यः छन्दोभ्यः अपवर्गे प्रवर्ग्यव्रताय । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये संवत्सराय ऋतुभ्यः अरुणेभ्यः काण्वर्षिभ्यः छन्दोभ्यः अरुणव्रताय । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये संवत्सराय ऋ-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तुभ्यः अरुणेभ्यः काण्वर्षिभ्यः छन्दोभ्यः अपवर्गे अरुणव्रताय । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये छन्दोभ्यः ऋषिभ्यः छन्दोभ्यः औपनिषदव्रताय । श्रियै श्रीकामदेवताभ्यः । यशसे यशस्कामदेवताभ्यः । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये छन्दोभ्यः ऋषिभ्यः छन्दोभ्यः अपवर्गे औपनिषदव्रताय गोदानव्रतदेवताभ्यः । छन्दोभ्यः अपवर्गे त्रैविद्यकव्रतदेवताभ्यः स्नातकव्रतदेवताभ्यः । मौञ्जीबन्धनयागदेवताभ्यः । भगवते वासुदेवाय संकर्षणाय प्रद्युम्नाय अनिरुद्धाय सत्याय पुरुषाय अच्युताय माधवाय गोविन्दाय सहस्रनाम्ने विष्णवे लक्ष्मीसहिताय नारायणाय । भवाय देवाय शर्वायदेवाय रुद्रायदेवाय पशुपतयेदेवाय उग्रायदेवाय भीमायदेवाय महादेवाय ईशानायदेवाय पार्वतीसहिताय परमेश्वराय । विनायकाय एकदन्ताय कृष्णपिङ्गलाय गजाननाय लम्बोदराय भालचन्द्राय हेरम्बाय आखुरथाय विघ्नेशाय विघ्नभक्ष्याय वल्लभा

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सहिताय महागणेशाय । ह्रांह्रींसःसूर्याय सप्ताश्वाय अ-
नश्वाय एकाश्वाय नीलाश्वाय प्रत्यक्षदेवाय परमार्थसा-
राय तेजोरूपाय प्रभासहिताय आदित्याय । भगवत्यै
अम्बायै कामायै चार्वङ्ग्यै टंकधारिण्यै तारायै पार्वत्यै
यक्षिण्यै श्रीशारिकाभगवत्यै श्रीशारदाभगवत्यै श्रीमहा-
राज्ञीभगवत्यै श्रीज्वालाभगवत्यै व्रीडाभगवत्यै वैखरीभ-
गवत्यै वितस्ताभगवत्यै गंगाभगवत्यै यमुनाभगवत्यै का-
लिकाभगवत्यै सिद्धलक्ष्म्यै महालक्ष्म्यै महात्रिपुरसुन्दर्यै
सहस्रनाम्न्यै देव्यै विष्णुपञ्चायतनदेवताभ्यः । अभयं-
करीदेव्यै क्षेमंकरीभवान्यै सर्वशत्रुघातिन्यै इहराष्ट्राधिप-
तये अमुकभैरवाय । इन्द्राय वज्रहस्ताय अग्नये शक्ति-
हस्ताय यमाय दण्डहस्ताय नैर्ऋतये खड्गहस्ताय वरु-
णाय पाशहस्ताय वायवे ध्वजहस्ताय कुबेराय गदाह-
स्ताय ईशानाय त्रिशूलहस्ताय ब्रह्मणे पद्महस्ताय वि-
ष्णवे चक्रहस्ताय अनन्तादिभ्यो अष्टाभ्यः कुलनागदे-
वताभ्यः । अश्व्यादित्याभ्यां वरुणचन्द्रमोसुभ्यां कुमार

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

भौमाभ्यां विष्णुबुधाभ्यां इन्द्राबृहस्पतिभ्यां सरस्वतीशु-
क्राभ्यां प्रजापतिशनैश्चराभ्यां गणपतिराहुभ्यां रुद्रकेतु-
भ्यां ब्रह्मध्रुवाभ्यां अनन्तागस्त्याभ्यां ब्रह्मणे कूर्माय
ध्रुवाय अनन्ताय हरये लक्ष्म्यै कमलायै शिख्यादि-
भ्यः पञ्चचत्वारिंशद्वास्तोष्पतिदेवताभ्यः ब्रह्म्यादिभ्यो-
मातृभ्यः गौर्यादिभ्योमातृभ्यः ललितादिभ्योमातृभ्यः
दुर्गाक्षेत्रेशगणेश्वरदेवताभ्यः राकादेवताभ्यः त्रिकादेव-
ताभ्यः सिनीवालीदेवताभ्यः यामीदेवताभ्यः रौद्रीदेव-
ताभ्यः वारुणीदेवताभ्यः ब्राहस्पतिदेवताभ्यः ओंभूर्देव-
ताभ्यः ओंभुवोदेवताभ्यः ओंस्वर्देवताभ्यः ओंभूर्भुवःस्व-
र्देवताताभ्यः अखण्डब्रह्माण्डदेवताभ्यः धूर्भ्यः उपधू-
र्भ्यः महागायत्र्यै सावित्र्यै सरस्वत्यै हेरकादिभ्यो वटु-
कादिभ्यः तुण्डुलमात्रं दधिमधुमिश्रं ओंनमो नैवेद्यं नि-
वेदयामि नमः ॥ हिरण्यगर्भः० । यः प्राणतो० ।
य ओजदा० । येन द्यौ० । य इमे द्यावा० । य-
स्येमे विश्वे० । आपो हयन्० । आनः प्रजज्ञ० ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अर्चन्तस्त्वा ॥ यजमानमानीय । आसनशोधनं । शु-
क्लाम्बरधरं० । अ नाभौ । अपसर्पन्तु० । तीर्थे स्नेयं० ।
वसोः पवित्रं० । (शकुनानयनम् ।) आ ब्राह्मन्० ।
यदाबध्नन् । परमात्मने० । स्वप्रकाशो० । वनस्पति० ।
नमो धर्म० । यत्रास्ति माता० । अद्य तावत्० ।
महागणपतये० । प्रजापतये० हेरुकादिभ्यो सुतस्य सु-
तयोः सुतानां वा मौञ्जीबन्धननिमित्तं धूपदीपसङ्कल्पा-
त्सिद्धिरस्तु धूपो नमः दीपो नमः ॥ "अपसव्येन ।"
नमः पितृभ्यः० । "सव्येन ।" गायत्र्यै नमः, ओं
भूर्भुवःस्वः ३ । अद्य तावत्० । महागणपतेः कुमार-
स्य श्रियः सरस्वत्याः लक्ष्म्याः विश्वकर्मणः द्वार्देवता-
नां प्रजापतेः ब्रह्मणः कलशदेवतानां ब्रह्मविष्णुमहेश्वर-
देवतानां चातुर्वेदेश्वरस्य सानुचरस्य ऋतुपतेः नारायण-
स्य दुर्गायाः त्र्यम्बकस्य वरुणस्य यज्ञपुरुषस्य अग्निष्वात्ता-
दीनां पितृगणदेवतानां । प्रजापतेः । सीमन्तकरणदे-
वतानां । अग्नेः इन्द्रस्य विष्णोः पुंसवनदेवतानां

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

जातकरणदेवतानां । कस्य प्रजापतेः नामकरणदेवतानां । मित्रस्य । सोमस्य । अन्नपतेः । चूडाकरणदेवतानां । मेधायाः सरस्वत्याः छन्दसां उपायनदेवतानां । छन्दसां त्रैविद्यकव्रतदेवतानां । उपाकरणव्रतदेवतानां । छन्दसां चातुर्होतृकव्रतदेवतानां । छन्दसां अपवर्गे चातुर्होतृकव्रतदेवतानां । ब्रह्मणः प्रजापतेः घर्मस्य सम्राजः सूर्यस्य विभ्राजः देवानां घर्मपानां पितॄणां घर्मपानां छन्दसां प्रवर्ग्यव्रतदेवतानां । ब्रह्मणः प्रजापतेः घर्मस्य सम्राजः सूर्यस्य विभ्राजः देवानां घर्मपानां पितॄणां घर्मपानां छन्दसां अपवर्गे प्रवर्ग्यव्रतदेवतानां । अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रजापतेः संवत्सरस्य ऋतूनां अरुणानां काण्वर्षीणां छन्दसां अरुणव्रतदेवतानां । अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रजापतेः संवत्सरस्य ऋतूनां अरुणानां काण्वर्षीणां छन्दसां अपवर्गे अरुणव्रतदेवतानां । अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रजापतेः छन्दसां ऋषीणां छन्दसां औपनिषदव्रतदेवतानां ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

श्रियः यशसः । अग्नेः वायोः सूर्यस्य ब्रह्मणः प्रज
पतेः छन्दसां ऋषीणां छन्दसां अपवर्गे औपनिषद
तदेवतानां । गोदानव्रतदेवतानां । छन्दसां अपव
त्रैविद्यकव्रतदेवतानां । स्नातकव्रतदेवतानां । मौञ्जी
न्धनयागदेवतानां । भगवतः वासुदेवस्य सङ्कर्षणस्य
द्युम्नस्य अनिरुद्धस्य सत्यस्य पुरुषस्य अच्युतस्य माध
स्य गोविन्दस्य सहस्रनाम्नः विष्णोः लक्ष्मीसहित
नारायणस्य । भवस्य देवस्य शर्वस्य देवस्य रुद्रस्य दे
स्य पशुपतेर्देवस्य । उग्रस्य देवस्य भीमस्य देवस्य
हादेवस्य ईशानस्य देवस्य पार्वतीसहितस्य परमेश्वरस्य
विनायकस्य एकदन्तस्य कृष्णपिङ्गलस्य गजाननस्य
म्बोदरस्य भालचन्द्रस्य हेरम्बस्य आखुरथस्य विघ्ने
स्य विघ्नभक्ष्यस्य वल्लभासहितस्य महागणेशस्य ।
हंसः सूर्यस्य सप्ताश्वस्य अनश्वस्य एकाश्वस्य नीला
स्य प्रत्यक्षदेवस्य परमार्थसारस्य तेजोरूपस्य प्रभा
हितस्य आदित्यस्य । भगवत्याः आयायः कामा

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

चार्वंग्याः टंकधारिण्याः तारायाः पार्वत्याः यक्षिण्याः श्रीशारिकाभगवत्याः श्रीशारदाभगवत्याः श्रीमहाराज्ञी-भगवत्याः श्रीज्वालाभगवत्याः श्रीडाभगवत्याः वैखरी-भगवत्याः वितस्ताभगवत्याः गङ्गाभगवत्याः यमुनाभगव-त्याः कालिकाभ० सिद्धलक्ष्म्याः महालक्ष्म्याः महात्रिपुर-सुन्दर्याः सहस्रनाम्न्यः देव्याः विष्णुपञ्चायतनदेवतानां। अभयङ्करीदेव्याः क्षेमंकरीभवान्याः सर्वशत्रुघातिन्याः। इहराष्ट्राधिपतेः अमुकभैरवस्य। इन्द्रस्य वज्रहस्तस्य अग्नेः शक्तिहस्तस्य यमस्य दण्डहस्तस्य नैर्ऋतेः ख-ड्गहस्तस्य वरुणस्य पाशहस्तस्य वायोः ध्वजहस्तस्य कुबेरस्य गदाहस्तस्य ईशानस्य त्रिशूलहस्तस्य ब्रह्मणः पद्महस्तस्य विष्णोः चक्रहस्तस्य अनन्तादीनां अष्टानां कुलनागदेवतानां अग्न्यादित्ययोः वरुणचन्द्रमसोः कु-मारभौमयोः विष्णुबुधयोः इन्द्राबृहस्पत्योः सरस्वती-शुक्रयोः प्रजापतिशनैश्चरयोः गणपतिराह्वोः रुद्रकेत्वोः ब्रह्मध्रुवयोः अनन्तागस्त्ययोः। ब्रह्मणः कूर्मस्य ध्रुव-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

स्य अनन्तस्य हरेः लक्ष्म्याः कमलायाः शिख्यादीनां
पञ्चचत्वारिंशद्वास्तोष्पतिदेवतानां ब्राह्म्यादीनां मातॄणां
गौर्यादीनां मातॄणां ललितादीनां मातॄणां दुर्गाक्षेत्रेशग
णेश्वरदेवतानां राकादेवतानां त्रिकादेवतानां सिनीवा
लीदेवतानां यामीदेवतानां रौद्रीदेवतानां वारुणीदेवता
नां बार्हस्पत्यदेवतानां । ॐभूर्देवतानां ॐभुवोदेवतानां
ॐस्वर्देवतानां ॐभूर्भुवःस्वर्देवतानां अखण्डब्रह्माण्डदे
तानां धुरां उपधुरां महागायत्र्याः सावित्र्याः सरस्वत्या
हेरुकादीनां वटुकादीनां ॥ आत्मनो वाञ्छ० सुतस्य
सुतयोः सुतानां वा मौञ्जीबन्धननिमित्तं द्वार्देवतापूज
कलशपूजनं ग्रहमण्डलपूजनं दशदिक्पालपूजनं क्षेत्रेश्व
पूजनमर्चामहं करिष्ये ॐकुरुष्व ॥ तिलसर्षपयवान्वि
कीर्य । एवमेव । महागणपतेरिदमासनं नमः कुमा
स्य० । हेरुकादीनां इदमासनं नमः ॥ महागणपतये
हेरुकादिभ्यो० । युष्मान्वः पूजयामि ॐपूजय । म
महागणपतिं कुमारं श्रियं सरस्वतीं लक्ष्मीं विश्वकर्मा

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ार्देवताः प्रजापतिं ब्रह्माणं कलशदेवताः ब्रह्मविष्णुम-
श्वरदेवताः चातुर्वेदेश्वरं सानुचरं ऋतुपतिं नारायणं
र्गां त्र्यम्बकं वरुणं यज्ञपुरुषं अग्निष्वात्तादीः पितृग-
देवताः । प्रजापतिं सीमन्तकरणदेवताः । अग्निं इन्द्रं
वष्णुं पुंसवनदेवताः । जातकरणदेवताः । कं प्रजापतिं
ामकरणदेवताः । मित्रं सोमं । अन्नपतिं । चूढाकरणदेव-
ाः । मेधां सरस्वतीं छन्दांसि उपायनदेवताः । छ-
दांसि त्रैविद्यकव्रतदेवताः । उपाकरणव्रतदेवताः ।
न्दांसि चातुर्होतृकव्रतदेवताः । छन्दांसि अपवर्गे चा-
र्होतृकव्रतदेवताः । ब्रह्माणं प्रजापतिं घर्मं सम्राजं
र्यं विभ्राजं देवान् घर्मपान् पितृन् घर्मपान् छन्दांसि
वर्ग्यव्रतदेवताः । ब्रह्माणं प्रजापतिं घर्मं सम्राजं सूर्यं
विभ्रजं देवान् घर्मपान् पितृन् घर्मपान् छन्दांसि प्रव-
र्ग्यव्रतदेवताः । ब्रह्माणं प्रजापतिं घर्मं सम्राजं सूर्यं
विभ्राजं देवान् घर्मपान् पितृन् घर्मपान् छन्दांसि अ-
वर्गे प्रवर्ग्यव्रतदेवताः । अग्निं वायुं सूर्यं ब्रह्माणं प्र-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

जापतिं संवत्सरं ऋतून् अरुणान् काण्डर्षीन् छन्दांसि
अरुणव्रतदेवताः । अग्निं वायुं सूर्यं ब्रह्माणं प्रजापतिं
छन्दांसि ऋषीन् छन्दांसि औपनिषदव्रतदेवताः । श्रियं
यशसं । अग्निं वायुं सूर्यं ब्रह्माणं प्रजापतिं ऋषीन्
छन्दांसि अपवर्गं औपनिषदव्रतदेवताः । गोदानव्रतदे
वताः । छन्दांसि अपवर्गंत्रैविद्यकव्रतदेवताः स्नातकव्र
तदेवताः मौञ्जीबन्धनयागदेवताः । भगवन्तं वासुदे
सङ्कर्षणं प्रद्युम्नं अनिरुद्धं सत्यं पुरुषं अच्युतं माध
गोविन्दं सहस्रनामानं लक्ष्मीसहितं नारायणं । भवंदे
शर्वंदेवं रुद्रंदेवं पशुपतिंदेवं उग्रंदेवं भीमंदेवं महादे
ईशानंदेवं पार्वतीसहितं परमेश्वरं । विनायकं एकदन्
कृष्णपिङ्गलं गजाननं लम्बोदरं भालचन्द्रं हेरम्बं आ
खुरथं विघ्नेशं विघ्नभक्ष्यं वल्लभासहितं महागणेशं
ह्रांह्रींसः सूर्यं सप्ताश्वं अनश्वं एकाश्वं नीलाश्वं प्रत्यक्षदे
परमार्थसारं तेजोरूपं प्रभासहितं आदित्यं । भगवत

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

श्रीशारिकाभगवतीं श्रीशारदाभ० । श्रीमहाराज्ञीभ० श्री-
ज्वालाभ० ब्रीडाभ० वैखरीभ० वितस्ताभ० गङ्गाभ०
यमुनाभ० कालिकाभ० सिद्धलक्ष्मीं महालक्ष्मीं महा-
त्रिपुरसुन्दरीं सहस्रनाम्नीं देवीं । विष्णुपञ्चायतनदेवताः ।
अभयङ्करीदेवीं क्षेमङ्करीभवानीं सर्वशत्रुघातिनीं इहराष्ट्रा-
धिपतिं अमुकभैरवं । इन्द्रं वज्रहस्तं अग्निं शक्तिहस्तं य-
मं दण्डहस्तं नैर्ऋतिं खड्गहस्तं वरुणं पाशहस्तं वायुं
ध्वजहस्तं कुबेरं गदाहस्तं ईशानं त्रिशूलहस्तं ब्रह्माणं
पद्महस्तं विष्णुं चक्रहस्तं अनन्तादीः अष्टौ कुलनागदे-
वताः । अग्न्यादित्यौ वरुणचन्द्रमसौ कुमारभौमौ वि-
ष्णुबुधौ इन्द्राबृहस्पती सरस्वतीशुक्रौ प्रजापतिशनैश्चरौ
गणपतिराहू रुद्रकेतू ब्रह्मध्रुवौ अनन्तागस्त्यौ ब्रह्माणं
कूर्मं ध्रुवं अनन्तं हरिं लक्ष्मीं कमलां शिख्यादीः प-
ञ्चचत्वारिंशद्वास्तोष्पतिदेवताः ब्राह्म्यादीः मातृः गौर्या-
दीः मातृः ललितादीः मातृः दुर्गाक्षेत्रेशगणेश्वरदेवताः
[illegible] त्रिकाले० [illegible]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

वारुणीदे० बार्हस्पतिदे० ॐभूर्दे० ॐभुवोदे० ॐस्वर्दे० ॐभूर्भुवःस्वर्दे० अखण्डब्रह्माण्डदे० धुरः उपधुरः महागायत्रीं सावित्रीं सरस्वतीं हेरुकादीन् वटुकादीन् आवाहयिष्यामि ॐआवाहय ॥ (आवाहनानि कलशे ।) यवान्विकीर्य । पाद्यार्थमुदकं नमः । शन्नो देवा० । लाजाश्च० । महागणपतये० । हेरुकादिभ्यो० पाद्यं नमः ॥ शेषं निवार्य । पुनः शन्नो देवी० । आपः क्षीरं० । महागणपते कुमार श्रीः सरस्वति लक्ष्मीः विश्वकर्मन् द्वार्देवताः प्रजापते ब्रह्मन् कलशदेवताः । ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वर सानुचर ऋतपते नारायण दुर्गे त्र्यम्बक वरुण यज्ञपुरुष अग्निष्वात्तादयः पितृगणदेवताः । प्रजापते सीमन्तकरणदेवताः अग्ने इन्द्र विष्णो पुंसवनदेवताः । जातकरणदेवताः क प्रजापते नामकरणदेवताः । मित्र । सोम । अन्नपते चूडाकरणदेवताः मेधे सरस्वति छन्दांसि उपायनदेवताः । छन्दांसि औपधिकव्रतदेवताः । उपाकरणदेवताः । छन्दांसि चा

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तुर्होतृकव्रतदेवताः । ब्रह्मन् प्रजापते घर्म सम्राट् सूर्य विभ्राट् देवाः घर्मपाः पितरः घर्मपाः छन्दांसि प्रवर्ग्यव्रतदेवताः । ब्रह्मन् प्रजापते घर्म सम्राट् सूर्य विभ्राट् देवाः घर्मपाः पितरः घर्मपाः छन्दांसि अपवर्गे प्रवर्ग्यव्रतदेवताः । अग्ने वायो सूर्य ब्रह्मन् प्रजापते छन्दांसि ऋषयः छन्दांसि औपनिषदव्रतदेवताः । श्रीः । यशः । अग्ने वायो सूर्य ब्रह्मन् प्रजापते छन्दांसि ऋषयः छन्दांसि अपवर्गे औपनिषदव्रतदेवताः गोदानव्रतदेवताः । मौञ्जीबन्धनयागदेवताः । भगवन् वासुदेव संकर्षण प्रद्युम्न अनिरुद्ध सत्य पुरुष अच्युत माधव गोविन्द सहस्रनामन् विष्णो लक्ष्मीसहित नारायण । भवदेव शर्वदेव रुद्रदेव पशुपतेदेव उग्रदेव भीमदेव महादेव ईशानदेव पार्वतीसहितपरमेश्वर । विनायक एकदन्त कृष्णपिंगल गजानन लम्बोदर भालचन्द्र हेरम्ब आखुरथ विघ्नभक्ष्य वल्लभासहित महागणेश । [illegible]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सार तेजोरूप प्रभासहित आदित्य । भगवति अम्बे
कामे चार्वाङ्गि टङ्कधरिणि तारे पार्वति यक्षिणि श्री-
शारिकाभगवति श्रीशारदाभ० श्रीमहाराज्ञीभ० श्रीज्वा-
लाभ० श्रीडाभ० वैखरीभ० वितस्ताभ० गंगाभ० य-
मुनाभ० कालिकाभ० सिद्धलक्ष्मीः महालक्ष्मीः महा-
त्रिपुरसुन्दरि सहस्रनाम्नि देवि भवानि विष्णुपञ्चायतन-
देवताः । अभयंकरीदेवि क्षेमंकरीभवानि सर्वशत्रुघातिनि
इह राष्ट्राधिपते अमुकभैरव । इन्द्र वज्रहस्त अग्ने शक्ति-
हस्त यम दण्डहस्त नैर्ऋते खड्गहस्त वरुण पाशहस्त
वायो ध्वजहस्त कुबेर गदाहस्त ईशान त्रिशूलहस्त
ब्रह्मन् पद्महस्त विष्णो चक्रहस्त अनन्तादयोऽष्टौकुलना-
गदेवताः अग्न्यादित्यौ वरुणचन्द्रमसौ कुमारभौमौ वि-
ष्णुबुधौ इन्द्राबृहस्पती सरस्वतीशुक्रौ प्रजापतिशनैश्चरौ
गणपतिराहू रुद्रकेतू ब्रह्मध्रुवौ अनन्तागस्त्यौ ब्रह्मन् कू-
र्म ध्रुव अनन्त हरे लक्ष्मीः कमले शिख्यादयः पञ्चच-
त्वारिंशद्वास्तोष्पतिदेवताः । ब्रह्म्यादयो मातरः गौर्यादयो

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मातरः ललितादयो मातरः दुर्गाक्षेत्रेशगणेश्वरदेवताः राकादे० त्रिकादे० सिनीवालीदे० यामीदे० रौद्रीदे० वारुणीदे० बार्हस्पतिदे० । ॐभूर्दे० ॐभुवोदे० ॐस्वर्दे० ॐभूर्भुवःस्वर्दे० अखण्डब्रह्माण्डदे० धुरः उपधुरः महागायत्रि सावित्रि सरस्वति हेरुकादयो वटुकादयः इदं वोऽर्घ्यं नमः । महागणपतये समालभनं गन्धो नमः एवमर्घो नमः पुष्पं नमः । दक्षिणान्तं । तद्विष्णोः० । मुक्ताविद्रुम० । इति कलशे पुष्पं ॥

अथाग्निकर्म । पात्रं तिला० । निर्दग्धं रक्षो० । अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य ९ आदौ पञ्च० । १६

अथाग्निकुण्डपूजा । (वेदिमुपस्पृश्य)। आगच्छ वरदे ज्ञानमुद्रे यज्ञैर्विभूषिते । वेदि वेदमयैर्मन्त्रैः संस्कृते ते नमो नमः ॥ त्वामाश्रित्य स्थिता देवा घृताहुतिं पिबन्ति ये । ते देवास्तुष्टिमायान्तु मा विघ्नं यज्ञकर्मणि ॥ पयः पृथिव्यां पय ओषधीषु० । देवस्य त्वा सवितुः० ॥(अथाञ्जलिः)॥ संमुखा तिष्ठ वेदि त्वं यथा स्थास्य-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

न्ति देवताः । स्थानभूता शिवादीनां शक्तीनां सुरपूजि-
ते । ब्रह्माऽऽज्ञयाद्य मे यज्ञं सफलीकर्तुमर्हसि ॥ ( गणपत-
येऽर्घोटं ज्वालालिङ्गे श्रीफलकन्दौ च संस्थाप्य ) ॥ सं
व्वः सृजामि । अश्विनोः प्राण ॥ ॐ गायत्र्यै नमः
३ । तत्पुरुषाय विद्महे वक्रतुण्डाय० । ३ । वैश्वान-
राय विद्महे सप्तार्चिषे धी० तन्नोऽग्निः प्र ३ ॥ पाव-
काय विद्महे हेलालीलाय धीः तन्नोग्नि० ३ । तत्पु०
महादेवा० ३ । अद्य तावत्ति० महागणपतेः० द्वार्देव-
तानां, विनायकस्य ८ आदित्यमणेः अनुमतिमणेः
सरस्वतिमणेः (पूर्वे) देवमुखस्य (आग्नेये) सप्तजिह्वस्य (द-
क्षिणे) वैश्वानरस्य (नैर्ऋते) जातवेदसः (पश्चिमे) अग्नेः
(वायवे) हुताशनस्य (उत्तरे) हुतवहस्य (ईशाने) कृष्णवर्त्म-
नः (मध्ये) अग्नेः सहस्राक्षस्य शतं ते प्राणः शतं ते
व्यानः शतं ते तेजः सहस्रमुखस्य (ऊर्ध्वे) ब्रह्मविष्णुमहे-
श्वरदेवतानां काल्याः कराल्याः मनोजवायाः सलोहि-
तायाः धूम्रायाः विस्फुलिंगिन्याः सुमनसायाः विश्वच-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

र्यायाः ब्रह्माण्डव्यापिन्याः ज्वालालिङ्गतेजसः धूम्रवर्णायाः नीलवर्णायाः कपिलायाः ज्वालायाः तेजोवत्याः हव्यवाहायाः कव्यवाहायाः रौद्र्याः संहारिण्याः तापिन्याः पाचिन्याः । भवस्य देवस्य ८ षड्त्रिंशत्तत्त्वानां सप्तजिह्वासहितस्य पावकस्य ब्रह्माण्डव्यापकतेजोमयपरमशिवज्वालालिङ्गदेवतानां (स्रुचमूले) सोमस्य शुक्रस्य अग्नेः (मध्ये) महेश्वरस्य [मूर्ध्नि] ब्रह्मणः । [स्रुचमूले] अपां [मध्ये] भास्करस्य [रन्ध्रयोः) गौर्याः दुर्गायाः कात्यायन्याः मह्याः स्रुक्स्रुवदेवतानां आत्मनो० सुतस्य सुतयोः सुतानां वा मौञ्जीबन्धननिमित्तं द्वार्देवतापूजनं अग्निकुण्डपू० ज्वालालिङ्गपू० स्रुक्स्रुवपूजनमर्चामहं करिष्ये ओं कुरुष्व ॥ एवमेवासनं ॥ महागणपतये० विनायकाय० आदित्यमणये अनुमतिमणये सरस्वतिमणये पूर्वे देवमुखाय आग्नेये सप्तजिह्वाय दक्षिणे वैश्वानराय नैर्ऋते जातवेदसे पश्चिमे अग्नये वायव्ये हुताशनाय उत्तरे हव्यवाहाय ईशाने कृष्णवर्त्मने मध्ये अग्नये सहस्राक्षाय

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

शतं ते प्राणः शतं ते व्यानः शतं ते तेजः सहस्रमुखाय ऊर्ध्वे ब्रह्मविष्णुमहेश्वरदेवताभ्यः काल्यै कराल्यै मनोजवायै सुलोहितायै धूम्रायै विस्फुलिङ्गिन्यै सुमनसायै विश्वचर्यै ब्रह्माण्डव्यापिन्यै ज्वालालिङ्गतेजसे धूम्रवर्णायै नीलवर्णायै कपिलायै ज्वालायै तेजोवन्यै हव्यवाहायै कव्यवाहायै रौद्र्यै संहारिण्यै तापिन्यै पाचिन्यै। भवाय देवाय ८ षड्त्रिंशत्तत्त्वेभ्यः सप्तजिह्वासहिताय पावकाय ब्रह्माण्ड व्यापकतेजोमयपरमाशिवज्वालालिङ्गदेवताभ्यः। सोमाय शुक्राय अग्नये महेश्वराय ब्रह्मणे। अद्भ्यः भास्कराय गौर्यै दुर्गायै कात्यायन्यै मह्यै स्रुक्स्रुवदेवताभ्यः युष्मान्वः पूजयामि ओं पूजय। महागणपतिं० विनायकं ८ आदित्यमग्निं अनुमतिमग्निं सरस्वतिमग्निं (पूर्वे) देवमुखं [आग्नेये] सप्तजिह्वं [दक्षिणे] वैश्वानरं ( नैर्ऋते ) जातवेदसं (पश्चिमे) अग्निं( वायव्ये) हुताशनं (उत्तरे) हुतवाहं (ईशाने) कृष्णवर्त्मानं (मध्ये) अग्निं सहस्राक्षं शतं ते प्राणः शतं ते व्यानः शतं ते तेजः सहस्रमुखं [ऊर्ध्वे] ब्रह्मविष्णुमहेश्वरदे-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

वताः कालीं करालीं मनोजवां सुलोहितां धूम्रां विस्फु-
लिङ्गिनीं सुमनसां विश्वचर्यां ब्रह्माण्डव्यापिनीं ज्वाला-
लिङ्गतेजसं धूम्रवर्णां नीलवर्णां कपिलां ज्वालां तेजो-
वतीं हव्यवाहां कव्यवाहां रौद्रीं संहारिणीं तापिनीं पा-
चिनीं भवं देवं ८ षड्त्रिंशत्तत्त्वानि सप्तजिह्वासहितं पा-
वकं ब्रह्माण्डव्यापकतेजोमयपरमशिवज्वालालिङ्गदेवताः
सोमं शुक्रं अग्निं महेश्वरं ब्रह्माणं । अपः भास्करं गौरीं
दुर्गां कात्यायनीं महीं स्रुक्स्रुवदेवताः आवाहयिष्यामि
ॐमावाहय ॥ आवाहयाम्यहं देवं गणेशं सुरपूजितम्
सदैव विघ्नहर्तारं सर्वकामफलप्रदम् ॥ रक्तवर्णोमहातेजा
रक्तस्रग्दामभूषितः । बलिः पुष्पं चरुश्चैव धूपोयं परिक-
ल्पितः ॥ अग्निं स्वाहासमेतं दितिजसुरनुतं रक्तवर्णं त्रि-
नेत्रं कण्ठे हारं भुजाभ्यां वरमभयमथो दक्षिणाभ्यां वह-
न्तम् । वामाभ्यामक्षमालाममृतकलशकं रम्यहासं सुवे-
षं नानालङ्कारयुक्तं मृगवरसहितं त्वाह्वये होमकाले ॥
ज्वालामण्डितमाकाशं० ॥ (ज्वालालिङ्गे) आवाहयामि

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

गिरिजाधवमीश्वरं तं गौरीयुतं सकलपाशहरं सुरेशम् । चर्माम्बरं दशभुजं च त्रिशूलहस्तं व्यालैर्विभूषिततनुं मखरक्षणार्थम् ॥ (स्रुक्स्रुचौ) ॥ मूले सोमाग्निशुक्रा-स्पदमथ शिरसि ब्रह्मणो मध्यदेशे माहेश्वर्यं स्रुवं तं स्रु-चमपि पयसां भास्करस्याथ मध्ये । दुर्गागौर्योर्द्विरन्ध्रे स्वजनभयहतेर्भूमिकात्यायनीयं देवान्पितॄन्नृषींश्चा।विरतकुश-लदावाह्वये वां स्वहोमे ॥ भगवन्पुण्डरीकाक्ष० । शन्नो देवी० । महागणपतये० पाद्यं नमः । पुनः शन्नो देवी । आपः क्षीरं । महागणपते कुमार० विनायक ६ आदित्यमणे अनुमतिमणे सरस्वतिमणे पूर्वे देवमुख अग्नेये सप्तजिह्व दक्षिणे वैश्वानर नैर्ऋते जातवेदः पश्चिमे अग्ने वायव्ये हुताशन उत्तर हुतवाह ईशाने कृष्णावर्त्मन् मध्ये अ-ग्ने सहस्राक्ष शतं ते प्राणः शतं ते व्यानः शतं ते तेजः सहस्रमुख ऊर्ध्वे ब्रह्मविष्णुमहेश्वरदेवताः कालि करालि मनोजवे सुलोहिते धूम्रे विस्फुलिङ्गिनि सुमन-से विश्वचर्ये ब्रह्माण्डव्यापिनि ज्वालालिङ्गतेजः धूम्रव-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

र्णे नीलवर्णे कपिले ज्वाले तेजोवति हव्यवाहे कव्य-
वाहे रौद्रि संहारिणि तापनि पाचिनि । भव देव ८
षड्त्रिंशत्तत्त्वानि सप्तजिह्वासहित पावक ब्रह्माण्डव्याप-
कतेजोमयपरमशिवज्वालालिङ्गदेवताः सोम शुक्र अग्ने
महेश्वर ब्रह्मन् अपः भास्कर गौरि दुर्गे कात्यायनि
महि स्रुक्स्रुवदेवताः इदं वोर्घ्यं नमः । महागणपतये
गन्धादि दक्षिणानैवेद्यान्तम् ॥ अथ पुरोहितपूजा ॥
शतक्रतोर्यथा जीवो विष्णोर्ब्रह्मा यथा पुरः । अध्वर्यो-
र्भूत्तथा मे त्वं भव ब्रह्मन्नमोस्तु ते । इन्द्राबृहस्पतिभ्यां
गन्धादि नैवेद्यान्तम् । अथ स्रुक्स्रुवप्रतिपादनम् । सावि-
त्राणि सावित्रस्य देवस्य त्वा स० आत्मनो यज्ञसाफ-
ल्यद्वारा सर्वात्मकविष्णुप्रीत्यर्थं ब्राह्मणाय स्रुक्स्रुवौ प्र-
तिपादयामि ३ प्रतिगृह्णामि ३ ॥ [गृहीत्वापठति हस्तौ
चालयन्] त्रातारमिन्द्रमवितारमिन्द्र हवे हवे सुहवं शूर-
मिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा
धात्विन्द्रः ॥ [illegible]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

बाढ ऋषिराह्वदूतये । रथं न दुर्गाद्वसवः सदानवो वि
श्वस्मान्नो अंहसो निष्पिपर्तन । २ चित्तिः स्रुक्चित्तमाज्
वाग्वेदिराधीतं बर्हिः । केतोरग्निर्विज्ञातमग्निर्वाचस्पतिर्हो
ता मन उपवक्ता प्राणो हविः सामाऽध्वर्युरिन्द्रं गच्छ
नमः ३ कया नश्चित्र० ४ अन्नात्परिस्रुतो रसं०
ब्रह्मा देवानां० ६ पृथिवी शान्तिरन्तरिक्षं शान्ति०
[ततोऽग्निं पुष्पयित्वा] । सप्तहस्तश्चतुश्शृङ्गः सप्तजिह्वो द्वि
शीर्षकः । त्रिपात्प्रसन्नवदनः सुखासीनः शुचिस्मितः
यावद्धोमं तथा यज्ञं करिष्ये त्वदनुज्ञया । तावत्का
मिहातिष्ठ वह्ने विघ्नं निवारय २ [ततोऽग्निकोणे धमयेत्
ओं हुं हुतभुजे स्वाहा ३ अग्ने शक्के इति (मंत्रः) ॥ (अ
समित्पूजा) । ओंभूर्भुवः स्वर्मंत्रेण समिद्धमानयेद्बुधः
[घृतवती, पयः पृथिव्यामिति घृतदुग्धाभ्यां संस्पृशत् ।
घृतवती भुवनानामऽभिश्रियोर्वी पृथिवी मधुदुघे सुपे
सा । द्यावापृथिवी वरुणस्य धर्मणा विष्कम्भिते अ
जरे भूरितेजसा १ पयः पृथिव्यां पय ओषधीषु प

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

दिव्यन्तरिक्षे । पयोधाः पयस्वतीः प्रदिशः सन्तु सह्यम् २ [दर्भकाण्डद्वयं प्रज्वाल्यावर्तनीयम्] । येन देवा ज्योतिषोर्ध्वा उदारयन्येनादित्या वसवो येन रुद्राः । येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानाय स्वस्ति । [ततो नमस्कारः] । पृथिवी समित्तामग्निं समिन्धे तामहं समिन्धे सा मा समिद्धा सुसमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात् १ अन्तरिक्षं समित्तां वायुं समिन्धे तामहं समिन्धे० २ द्यौः समित्तां सूर्यं समिन्धे तामहं० ३ ॥ ओषधीनां पते सोम हव्यकव्येष्वऽयुक्तताम् । यथातथागतां सम्यक्दूरीकुरु नमोस्तुते । [ततः पूजा] । हव्यै कव्यै कुरुकुल्यायै सिन्धव्यै सिंह्यै अमृतवार्धिन्यै अमृतरूपिण्यै वह्निप्रियायै । गन्धादि नैवेद्यान्तमर्चयित्वा प्रणमेत् ॥ हव्यं प्रणीहि हव्यं शृणीहि हव्यं श्रपय हव्यं पाचय हव्यमासि हव्यत्वा हव्यं वहसि हव्यं सीद सुगमं प्रयासि ॥[ ततः पुस्तक पूजा ।] सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सरस्वतीं सुकृतो आह्वयन्ते सरस्वती दाशुषो वार्यं धात
लक्ष्म्यै मेधायै धरायै धृत्यै तुष्ट्यै वागीश्वर्यै वाग्देवता
गायत्र्यै सावित्र्यै सरस्वत्यै अमृतेश्वर्यै । गन्धादि नै
द्यान्तमर्चयित्वा । [अग्निभद्रं पठेत् ) । अग्नये समनमत्०
वायवे० । सूर्याय० वरुणाय० साम्ने० ब्राह्मणे० रा
रथाय समन० ॥ इत्यग्निकुण्डपूजा ॥

आदौ बीजवापनम् । उत्तरतः संस्तीर्य० । प्रजापतये
निर्वपामि । एवं प्रोक्षामि ॥ आघारादाज्यभागान्तंहुत्वा
यजमानपत्नीमानीय । या आपो दिव्या पयसा सम्
भूव या अन्तरिक्षा उत पार्थिवासः । तासां त्वा
वीसां रुचाऽभिषिञ्चामि वर्चसा ॥ अभि त्वा वर्चसा
सिचं यज्ञेन पयसा सह । यथासो मित्रवर्धनस्तथा
सविताकरत् । इन्द्रं विश्वा अवीवृधत्समुद्रंव्यचसं गि
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ [ऋतौ
तुर्थ्यां स्नातायां निशि प्रजापत्यं चरुं श्रपयित्वा

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

स्थालीपाकेन प्रधानं । प्रजापते नहि त्वदन्य एता वि

जातानि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् स्वाहा । तत ऋतुतिथियागादितन्त्रसमाप्तिः । अग्निं विमुच्य ॥ इति बीजवापनम् ॥ १ ॥

अथ सीमन्तोन्नयनम् ॥ अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य ९ आदौ पञ्च० । न निर्वापः । पृश्न्याः पयोसि । आघारादाज्यभागान्तं हुत्वा । ( तृतीये गर्भमासे सीमन्तं कारयते शुद्धपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा । पश्चादग्नेर्दर्भेषु प्राङासीनायाः सर्वान्केशान्प्रमुच्य प्रसादयति यजमानपत्नी ॥ ) यं सीमन्तं कंकतस्ते चकार यद्वा क्षुरः परिवर्ज्य वपंस्ते । स्त्रीषु रूपमश्विनौ तन्निधत्तं पौंस्येनेमं संसृजतं वीर्येण ॥ इन्द्राणी चक्रे कङ्कतं ससीमन्तं विसर्पतु । पुनः पतिभ्यो जायन्दा अग्ने प्रजया सह । ॥ पुनः पत्नीमग्निरदादायुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवातु शरदः शतम् । ( इति त्रिःश्वेतया शलल्या शमीशाखया सपलाशया वा सीमन्तं विनिनोति ) ॥ (पा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

स्ते राके इत्यथास्याः पृथक्केशपक्षौ सन्नह्यति )। यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि। ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ (नीललोहितेन सूत्रेण केशान् ग्रन्थयेत् )। नीललोहितं भवति कृत्या शक्तिर्व्यज्यते । एधन्ते अस्या ज्ञातयः पतिर्बन्धेषु बध्यताम् । इति । यो गुरुस्तमर्हयेदेतदेव कुमारीणां सद्योद्धरणमत्रैवानवलोभनम् ॥ (यजमानपत्न्याः) या आपो दिव्या० । चतुर्गृहीतेनाज्यप्रधानम् । ये के च ज्मा महि नो अहिमाया दिवो जज्ञिरे अपां सधस्थे । ते अस्मभ्यमिषये विश्वमायुः क्षप उस्रा वरिवस्यन्तु देवाः ॥ तत ऋतुतिथियागादितन्त्रसमाप्तिः । विमुच्य । इति सीमन्तोन्नयनम् ॥ २ ॥

अथ पुंसवनम् । अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च । अग्नये जुष्टं निर्वपामि । इन्द्राय जुष्टं निर्वपामि । विष्णवे जुष्टं निर्वपामि । एवं प्रो-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

त्वामि । आज्यभागान्तं हुत्वा । या आपो दिव्या ॥
[अथ पुंसवनं भूयिष्ठगतेषु गर्भमासेषु त्रीन्स्थालीपा-
कान् श्रपयेत् आग्नेयं ऐन्द्रं वैष्णवं च तेषां यथादैवतं
जुहोति ।] " अग्निस्तुविश्रवस्तमामिति स्थालीपाक-
स्य ।" अग्निस्तुविश्रवस्तमंतुविब्रह्माणमुत्तमम् । आ-
नूत्नं श्रावयत्पतिं पुत्रं ददातु दाशुषे स्वाहा ॥ "पु-
मानग्निरितिस्रुवेणाज्यहोमः ।" पुमानग्निरजायत पुंमांसं
जनयेत्पुत्रं दशमे मासि सूतवे । येन जातेन विभुना
जीवेम शरदः शतं पश्येम शरदः शतम् । इति त-
न्नो मंहस्व शत्तिनं सहस्रिणं गोसनिमश्वसनिं वीरम्
स्वाहा ॥ "इन्द्रच्छत्रमिति स्थालीपाकस्य ।" इन्द्र
च्छत्रमभि वाममोजोऽजायथा वृषभश्चर्षणीनाम् । अपा-
नुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम् स्वा-
हा ॥ "पुमानिन्द्र इति स्रुवेणाज्यहोमः ।" पुमानि-
न्द्रो अजायत पुमांसं० ॥ "प्र तद्विष्णुरिति स्थाली-
पाकस्य ।" प्र तद्विष्णुः स्तवते वीर्येण मृगो न भी-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मः कुचरो गिरिष्ठः । यस्योरुषु त्रिषु विक्रमणेष्वधि
क्षियन्ति भुवनानि विश्वा स्वाहा ॥ "पुमान्विष्णुरिति
स्रुवेणाज्यहोमः ।" पुमान्विष्णुरजायत पुमांसं जनये
त्पुत्रं दशमे मासि सूतवे । येन जातेन विभुना जी-
वेम शरदः शतं पश्येम शरदः शतम् । इति तन्नो
मंहस्व शतिनं सहस्रिणं गोसनिमश्वसनिं वीरं स्वाहा ।
तत ऋतुतिथियागादितन्त्रसमाप्तिः ॥ इति पुंसवनम् ॥३।

अथ जातकरणम् ॥ परिसमूह्य पर्युक्ष्य परिषिच्य
आदौ पश्च । न निर्वापः । आज्यभागान्तं हुत्वा ।
या आपो दिव्याः । (पुत्रे जाते नाम धीयते घोष
वदाद्यन्तरन्तःस्थं चतुरक्षरं यथोपपत्तिर्वा । अग्निमानी
तस्मिन्नाज्यभागान्तं हुत्वा सहिरण्ये कांस्ये सम्पाता
नवनयेत् ॥ चतुर्गृहीतेनाज्येनाष्टौ प्रधानाहुतीर्जुहुयात् ।
हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आ
सीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय ह
विषा विधेम स्वा "इत्यग्नौ" हा ॥ [ इति सहिरण

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

कास्ये आहुतिशेषमवनयेत् ] ॥ १ ॥ संवत्सरस्य प्रति मां ये त्वा रात्रिमुपास्महे । तेषामायुष्मतीं प्रजां रायस्पोषेण संसृज स्वा–, हा ॥ २ ॥ काय स्वा–, हा ॥ ३ ॥ कस्मै स्वा–, हा ॥ ४ ॥ कतमस्मै स्वा–, हा ॥ ५ ॥ प्रजापतये स्वा–, हा ॥ ६ ॥ "प्रजापते इति द्वाभ्याम् ।" प्रजापते नहि त्वदन्यः, एता विश्वा जातानि परिताबभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु स्वा–, हा ॥ ७ ॥ असा अमुष्य पुत्रोऽमुष्यासौ पुत्रो वयं स्याम पतयो रयीणां स्वा–, हा (देवदत्तो यज्ञदत्तस्य पुत्रो यज्ञदत्तस्य देवदत्तः पुत्रो वयं स्याम पतयो रयीणां स्वा–, हा ॥ ८ ॥) "अग्नेरायुरसीति हिरण्येन मुखं मेध्यं कृत्वा ।" अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा अमुकदेवायायुर्धेहि । [ पाणिना मुखमद्भिः संस्पृश्य ॥ प्रक्षाल्य स्तनावनुमन्त्रयते ॥ मधु वात इति तिसृभिः प्रत्यृचमनुमन्त्रयते ] मधु वात ऋतायते मधु क्षरन्ति सिन्धवः । माध्वी-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नः सन्त्वौषधीः ।(इति दक्षिणस्तनं)। मधु नक्तमुतो-षसा मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता । [इति वामस्तनं]। मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । [इत्युभौ ] ! [ततो हिरण्येन सम्पातान्सन्निघृष्य मधु चेत्येके तन्मुखे आ-युर्धयेति [बालकस्य नाम संगृह्य] सप्तभिराज्यं स्तनौ च पाययेत्पिता ]। "अमुकदत्त" आयुर्धय । जरान्धय । सत्यन्धय । श्रियन्धय । ऊर्जन्धय । ज्योतिर्धय । रा-यस्पोषन्धय । ब्रह्मवर्चसं धय । जीव शरदः शतं प-श्य शरदः शतम् । "इति मूर्ध्नि निघ्राप्य बोधश्चमे-ति स्वस्त्ययनं वाचयति । " बोधश्च मा प्रतीबोधश्च पुरस्ताद्गोपायताम् । अस्वप्नश्च माऽनवद्राणश्च दक्षिणतो गोपायताम् । गोपायमानश्च मा रक्षमाणश्च पश्चाद्गोपा-यताम् । जागृविश्च माऽरुन्धती चोत्तराद्गोपायताम् । अनमित्रं नो अधरागऽनामित्रमुदक्कृधि । इन्द्राऽनामित्रं नः पश्चादऽनामित्रं पुरस्कृधि । अनमित्रैरहोभिः सचेम-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

हि विश्वेदेवाः । अनमित्रा न उशसः सन्तु निम्रुचः । याः षड्‌र्वीः पञ्च प्रदिशस्ता न पान्तु, मित्रधा नो मित्रे दधात अभयं नो अस्तु, ये रात्रीमनुतिष्ठथ ये च भूतेषु जागृथ, पशून्ये सर्वान्रक्षत तेन आत्मसु जागृत ॥ बोधप्रतीबोधाऽस्वप्नानवद्राणगोपायमान रक्ष-मान जागृवेरुन्धति, ये देवास्तनूपाः स्थ ते म इह तन्वस्पात, बोधप्रतीबोधेत्यसौ वा आदित्यो बोधः, प्रतीबोधोऽग्निः, स्वप्नाणवद्राणेति चन्द्रमा वा अस्वप्नोयं य्यः पवते सोनवद्राणो गोपायमानरक्षमाणेत्यहर्वै गो-पायमानो रात्रीरक्षमाणो जागृवेरुन्धतीति यज्ञो वै जा-गृविर्दक्षिणारुन्धत्येते वै देवा राष्ट्रभृतस्तानेवेट्ट आत्म-नो गोपीथाय । इति ॥ तत ऋतुतिथ्यादि तन्त्रस-माप्तिः ॥ विमुच्य ॥ इति जातकरणम् ॥ ४ ॥

अथ नामकरणम् ॥ अग्निं परिसमूह्य पर्युक्ष्य परि-षिच्य । आदौ पञ्च ॥ काय प्रजापतये नामकरणदे-वताभ्यो जुष्टं निर्वपामि । एवं प्रोक्षामि । आज्यभा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

गान्तं हुत्वा ॥ [ दशम्यां तस्मिन्नेवाग्नौ पयसि स्थाली-पाकं श्रपयित्वा ] । सर्वगन्धैः फलोत्तरैः सशिरस्कं स्नापयित्वाऽहतेन वाससा प्रच्छाद्य । या आपो दिव्याः [ बालकस्य मन्त्रस्नानम् ] ॥ " स्थालीपाकस्य जुहोति" कया नश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृता स्वाहा ॥ १ ॥ कस्त्वा सत्यो मदनां मंहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु स्वाहा ॥ २ ॥ कया तच्छृण्वे शच्या शचिष्ठो यया कृणोति मुहु काचिदृष्वः । पुरु दाशुष्वे विचयिष्ठो अंहोथा दधाति द्रविणं जन्त्रे स्वाहा ॥ ३ ॥ प्रजापतये स्वाहा ॥४॥ प्रजापते नहि त्वदन्य० ॥ ५ ॥ देवदत्तो यज्ञदत्तस्य पुत्रो यज्ञदत्तस्य देवदत्तः पुत्रो वयं स्याम पतयो रयीणां स्वाहा ॥ ६ ॥ अग्नेरायुरसीति तुल्यमाललाटमभिमर्षणम् ॥ [ तदेव नाम धीयते इत्येके ] ॥ तत ऋतुतिथ्यादि । परि ते दूळभोरथो अस्माँ अश्नोति विश्वतः । येन रक्षसि दाशुषः ॥ सावित्राणि काय प्रजापतये

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नामकरणदेवताभ्यो नमो नैवेद्यं निवेदयामि नमः । इत्यन्तं कृत्वा ॥ ततः प्राक्स्विष्टकृतः कांस्ये पूतमाज्यमासिच्य हिरण्यं चाबन्धनीयं बहिस्तान्त्रिकेन विधिनाज्यं । “ पृश्न्याः पयोसि , इत्यादिना । युजुषे युजुषे इत्यन्तं संस्कृत्य । अग्नेरायुरसीति यजमानः कांस्ये हिरण्येनाज्यं वीक्ष्य । इन्द्रस्य प्राण इति पञ्चभिः स्रुवेन तदाज्यं जुहोति ॥ इन्द्रस्य प्राणः स ते प्राणं ददातु यस्य प्राणस्तस्मै ते स्वाहा ॥ १ ॥ पितॄणां प्राणः० ते प्राणं ददातु येषां प्राणस्तेभ्यो वः स्वाहा ॥ २ ॥ मरुतां प्राण० ॥ ३ ॥ विश्वेषां देवानां० ॥ ४ ॥ प्रजापतेः प्राणः स ते प्राणं ददातु, परमेष्ठिनः प्राणः स ते प्राणं ददातु ययोः प्राणस्ताभ्यां वां स्वाहा ॥ ५ ॥ (ततः पूर्वस्मादिळामन्त्र इत्यतः । आश्रावितामित्यन्तं हुत्वा । ‘ ततः प्राक्संस्थितयजुष्ये ब्रह्माघृते हिरण्यमवपद्यते ब्राह्मणः । [illegible] इति ॥ ) यदस्य तस्यापरम-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नो यन्नवमैस्तन्नवनीतमभवो यदध्रियथास्तद्घृतमभवः, घृतस्य धाराममृतस्य पन्थामिन्द्रेण दत्तं प्रयतं मरुद्भिः, तत्त्वा विष्णुरन्वपश्यत्तत्त्वेळा गव्यैरयेत् ॥ (पावमानेन घृतपात्रात्सुवर्णमुद्धृत्य ॥) पावमानेन त्वा स्तोमेन गायत्र्या वर्तन्योपांशोर्वीर्येणोद्धराम्यसौ ॥ १ ॥ अमुकदेव । असौ शब्दस्थाने कुमारस्य नाम आमन्त्रणप्रथमान्तं ग्राह्यम् ॥ बृहता त्वा रथन्तरेण त्रिष्टभा वर्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसौ ॥ २ ॥ अग्नेस्त्वा मात्रया जगत्या वर्तन्या देवस्त्वा सवितोन्नयतु जीवातवे जीवनस्याया असौ ॥ ३ ॥ अमुकशर्मन् ॥ (देवा आयुष्मन्त इति षड्भिर्यजमानाय प्रयच्छेदिति ॥) देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेषामयमायुषाऽयुष्मानस्त्वसौ ॥ १ ॥ असौ शब्दस्थाने शिशोः प्रथमान्तं नाम ग्राह्यम् । ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तस्यायमायुषाऽयुष्मानस्त्वसौ ॥ अमुकदत्तः ॥ २ ॥ अग्निरायुष्मान्स वनस्पतिभिरा० । अमुकस्वामी ॥ ३ ॥ यज्ञ आ

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

युष्मान् स दक्षिणाभिरा० । अमुकदेवः ॥ ४ ॥ सोम आयुष्मान् स ओषधीभिरा० । अमुकशर्मा ॥ ५ ॥ ओषधय आयुष्मतीस्ता अद्भिरायुष्मतीस्तासाम० । अमुकसोमः ॥ ६ ॥ तत्पिबत्यायुरेव निरवधयेदिति [ पिबति ] ॥ [ हिरण्याद्घृतं प्रक्षाल्य ] इममग्न [ इति कण्ठे आबध्नाति ] ॥ इममग्न अयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथाऽसत ॥ ( तस्य ललाटमभिमृश्याश्विनोः प्राण इति जपति । ) अश्विनोः प्राणस्तौ ते प्राणं दत्तां तेन जीव । मित्रावरुणयोः प्राणस्तौ ते प्राणं दत्तां तेन जीव । बृहस्पतेः प्राणः स ते प्राणं ददातु तेन जीव ॥ "बालकालिङ्गनं पित्रोरङ्गादिति" ॥ अङ्गादङ्गात्संभवसि हृदयादभिजायसे । आत्मा वै पुत्रनामासि जीव शरदः शतं पश्य शरदः शतमिति मूर्ध्नि निघ्राप्य, पूर्णां दत्त्वा ॥ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ इति नामकरणम् ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मुच्य ॥ इति नामकरणम् ॥ ५ ॥

अथ सूर्यदर्शनम् ॥ परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पश्च । मित्राय जुष्टं निर्वपामि । एवं प्रोक्षामि आज्यभागान्तं हुत्वा ॥ [ तृतीयेऽर्धमासे दर्शनमादित्यस्योदिते त्वादित्ये रथचक्रमात्रं द्विहस्तप्रमाणं स्थण्डिलमुल्लिख्य ॥ "मौञ्जीबन्धे रक्तश्वेते मण्डले सूर्यचन्द्रयोः । वर्तुले नवरेखाढ्ये वितस्तिसंमिते यजेदिति "॥ तरणिरिति चतुर्भिः स्रुवेणाज्यहोमः ] । तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रोचनम् स्वाहा ॥ १ ॥ दिवो रुक्मा उरुचक्षुरुदेति दूरे अर्थस्तरणिर्भ्राजमानः । नूनं जनः सूर्येण प्रसूता अयन्नर्थानि कृणवन्नपांसि स्वाहा ॥ २ ॥ उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यं स्वाहा ॥ ३ ॥ चित्रन्देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्राद्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ ४ ॥ ततः सूर्यपूजनम्

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

संव्वः सृजामि० । अश्विनोः० । गायत्र्यै नमः । ३
भास्कराय विद्महे सहस्ररश्मये धीमहि । तन्नः सूर्यः
प्रचोदयात् । ३ । अद्यतावत्० । मित्रस्य सानुचरस्य
आत्मनो० सुतस्य मौञ्जीबन्धननिमित्तं सूर्यपूजनमर्चा-
महं करिष्ये ॐ कुरुष्व । मित्रस्य सानुचरस्येदमासनं
नमः । मित्राय सानुचराय त्वां पूजयामि ॐ पूजय ।
मित्रं सानुचरमावाहयिष्यामि ॐ आवाहय ॥ आवा-
हयाम्यहं देवं भानुं सर्वजगद्गुरुम् । अरुणः सारथि-
र्यस्य सप्ताश्वरथवाहनः ॥ एहि सूर्य सहस्रांशो० ।
आकृष्णेन० । यवान्विकीर्य । शन्नो देवी । लाजा
गन्धो वचा कुष्ठं वालुकं पद्मकेसरम् । नागकेसरसं-
युक्तं पाद्यमेतत्प्रकल्पयेत् । मित्राय सानुचराय पाद्यं
नमः । पुनः शन्नो देवी० । आपः क्षीरं । कुङ्कु-
मागुरुकर्पूरचन्दनैश्च सुगन्धिभिः । मृगजातीसमायुक्तै-
रर्घ्यमेतत्प्रकल्पयेत् । मित्र सानुचर इदं वोऽर्घ्यं नमः ।
मित्राय सानुचराय समालभनं गन्धो नमः एवमग्रे

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नमः पुष्पं नमः । दक्षिणान्तं । अमृतमस्तु ॐ नम
आदित्याय ऋषिकश्यपपुत्राय अदितेर्गर्भसम्भूताय रक्त-
वर्णसदृशाय रक्ताम्बरचीरवाससे तपसोग्ररूपधराय भ-
क्तिभावनाय आरुह्य मेरुं प्रदक्षिणं कृत्वा ग्रहमण्डलं
प्रविश्य इत्यक्षतगन्धपुष्पधूपदीपसुवर्णरचितं बलिं प-
रिकल्पयामि स्वगणैः परिवृतः प्रीतमानसो भव ऋतं
ते नमः मित्राय सानुचराय नमो नैवेद्यं निवेदयामि
नमः । [मित्रो जनन्या । प्रसमित्र इति स्थालीपाक-
स्य] ॥ मित्रो जनन्यातयति प्रजानां मित्रो दधार पृ
थिवीमुत द्याम् । मित्रो कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं
घृतवद्विधेम स्वाहा १ प्रसमित्रमर्त्तो अस्तु प्रयस्वान्यस्त
आदित्य शिक्षते व्रतेन । न हन्यते न जीयते त्वोतो
नैनमंहो अश्नोत्यन्ति नो दूरात् स्वाहा २ ॥ [अभ्यावर्त्त-
स्वेति कुमारमभ्युदानयति] अभ्यावर्तस्व पृथिवी यज्ञेन प-
यसा सह । वपां ते अग्नीरिषतो आरोहत् । द्रष्ट्रे नम इ-
त्यक्षत्रिति चोपस्थानम् ॥ दर्शनम् उपदर्शे नमो ...

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मः ख्यात्रे नम उपख्यात्रे नमोऽनुक्शात्रे नमः शृण्वते
म उपशृण्व ते नमः सते नमोऽसते नमो जाताय नमो
निष्यमाणाय नमो भूतायनमो भविष्यते नमश्चक्षुषे न-
श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमः
न्ताय नमस्तपसे नमः ॥ अदृश्रन्नस्य केतवो विरश्म-
जनाननु । भ्राजन्तो अग्नयो यथा ॥ सर्पिष्मदन्नं ब्रा-
ह्मणान्भोजयेत् । तत ऋतुतिथ्यादि तंत्रसमाप्तिः ॥ विसु-
॥ इति सूर्यदर्शनम् ॥ ६ ॥

अथ चन्द्रदर्शनम् ॥ अग्निं परिसमूह्य पर्युक्ष्य परिषि-
। आदौ पश्च । सोमाय जुष्टं निर्वपामि । एवं प्रो-
मि । आज्यभागान्तं हुत्वा ॥ मक्षूदाता, भूयो जात
आज्यस्य जुहोति ॥ मक्षूदाता मातरिश्वा वचोभिश्चन्द्रो
घृताद्वर्धते जायमानः । आयुः प्रजाममृतं सौभगत्वं प्र
न्द्रमास्तिरते दीर्घमायुः स्वाहा ॥ १ ॥ भूयो जातो ह-
श्चन्द्रमास्मात्पूर्णः पुरस्तात्पयसो हविर्भिः । पयो ग-
[illegible]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ततः सोमपूजनम् । सूर्यस्योपरि नवरेखात्म वर्तुलं स
ममण्डलमुल्लिख्य ।। संव्वः सृजामि । अश्विनोः । स
यत्र्यै नमः ३ निशाकराय विद्महे शीतरश्मये धीमहि
तन्नः सोमः प्रचोदयात् ३ अद्य तावत् सोमस्य सा
चस्य । आत्मनो० सुतस्य मौञ्जीबन्धननिमित्तं चन्
जनमर्चामहं करिष्ये ॐ कुरुष्व । सोमस्य सानुचर
दमासनं नमः । सोमाय सानुचराय त्वां पूजयामि
पूजय । सोमं सानुचरमावाहयिष्यामि ॐआवाहय ।
वान्विकीर्य । आवाहयाम्यहं देवं चन्द्रं नक्षत्रनायक
शम्भोः शिरस्यलंकारं प्रत्यक्षं लोकनायकम् । शुक्लव
या ते धामानि । शन्नो देवी० । लाजाश्च । सो
सानुचराय पाद्यं नमः । पुनः शन्नो देवी० । अ
क्षीरं० । सोम सानुचर इदं वोर्घ्यं नमः । सोमाय
नुचराय समालभनं । दक्षिणान्तं । सावित्राणि० ॐ
मः सोमाय अत्रिपुत्राय अमृतोद्भवाय शुक्लवर्णसह
शुक्लाम्बरचीरवाससे तपसोग्ररूपधराय भक्तिभावनाय

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

रुह्य मेरुं प्रदक्षिणं कृत्वा ग्रहमण्डलं प्रविश्य इत्यक्षत-
गन्धपुष्पधूपदीपसुवर्णरचितं बलिं ते परिकल्पयामि स्व-
गणैः परिवृतः प्रीतमानसो भव ऋतं ते नमः सोमाय
सानुचराय नमो नैवेद्यं निवेदयामि नमः ॥ आप्याय-
स्व, सन्ते पयांसीति स्थालीपाकस्य । आप्यायस्व स-
मेतु ते विश्वतः सोम वृष्ण्यम् । भवावाजस्य सङ्गथे स्वा-
हा १ सन्ते पयांसि समयन्तु वाजाः संवृष्ण्यान्यभि-
मातिषाहः । आप्यायमानो अमृताय सोम दिवि श्र-
वांस्युत्तमानि धिष्व स्वाहा २ । ( अभ्यावर्तस्वेति कुमा-
रमभ्युदानयति ।) अभ्यावर्तस्व पृथिवी यज्ञेन पयसा
सह । वपां ते अग्ने रिषितो अरोहत् ॥ ( यथादित्यं, न-
वो इत्युपस्थानम् ।) यथादित्यमादित्या आप्याययन्ति
यथाक्षितिमक्षितयो वदन्ति । एवं मामिन्द्रो वरुणो बृ-
हस्पतिराप्याययन्तु भुवनस्य गोपाः १ नवो नवो भ-
वति जायमानोऽह्नां केतुरुषसामेत्यग्रम् । भागन्देवेभ्यो
वि[illegible]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

काशो आदर्शपर्यायः दक्षिणा । तत ऋतुतिथ्यादि
समाप्तिः विमुच्य । इति चन्द्रदर्शनम् ॥ ७ ॥

अथान्नप्राशनम् । अग्निं परिसमूह्य पर्युक्ष्य प
क्ष्य । आदौपश्च । अन्नपतये जुष्टं निर्वपामि एवं
क्षामि । । आज्यभागान्तं हुत्वा । (षष्टे मासेऽ
शनं दन्तेषु वा जातेषु सर्वाण्यन्नानि संयूय साध
त्वा आयुर्धा देव, घृतप्रतीक इति च द्वाभ्यां स्रुवे
ज्यहोमः ।) आयुर्धा देव जरसं वृणानो घृतं वसानो
पृष्टो अग्ने । घृतं पिबन्नमृतं चारु गव्यं पितेव
जरसे नयेमं स्वाहा ॥ १ ॥ घृतप्रतीको घृतपृष्टो
ग्निर्घृतं हवनो घृतमस्य धाम । घृतप्रुषो हरितस्त्वा
हन्तु घृतं पिबन्यजतादेव देवान् स्वाहा ॥ २ ॥(
न्नपतेरिति स्थालीपाकस्य ।) अन्नपते अन्नस्य नो
ह्यऽनमीवस्य शुष्मिणः । प्र प्रदातरं तारिषं ऊर्जं
देहि द्विपदे चतुष्पदे स्वाहा । अनयैव कुमारमपि
न्नं प्राशयेत् । [देवाग्नतोथ विन्यस्य शिल्पभाण्ड

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सर्वशः । अस्त्राणि सर्वशास्त्राणि ततः पश्येत लक्षणम् । प्रथमं यन्मृजेद्बालस्ततो भाण्डं स्वयं तदा । जीवितं तस्य बालस्य तेनैव तु भविष्यति ।] तत ऋतु-तिथ्यादितंत्रसमाप्तिः । इत्यन्नप्राशनम् ॥ ८ ॥

अथचूडाकरणम् ॥ परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च ॥ न निर्वापः । पृश्न्याः पयोसि । आज्यभागान्तं ॥ (तृतीयस्य वर्षस्य भूयिष्टेषु गतेषु चूडाः कारयते । दक्षिणतः कपुटावसिष्ठानाम् , उभयतोऽत्रिकश्यपानम् , मुण्डा भृगवः , पञ्च चूडा आङ्गिरसानाम् , वाजिमेके मङ्गलार्थं शिखिनोऽन्ये यथाकुलधर्म वा ॥ [ शुद्धपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा ।] आज्यभागान्तं । अयमगात्सविता क्षुरेणोष्णेन वायो उदकेन एहि । आदित्या रुद्रा वसवः सचेतसः सोमस्य राज्ञो वपत प्रचेतस इत्युष्णा अपोऽभिमन्त्रयते । उष्णाश्च शीताश्च समेत्य सर्वा बृहस्पतिः सविता सत्यधर्मा ...

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ताम् । सोमपुत्रस्याध्वरस्य । आर्द्रदानवः स्थ जीवदानवः स्थोन्दतीरिहैनमवताऽप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे इत्यभ्युन्देत् । ओषधे त्रायस्वैनमिति दर्भमन्तर्धाय, स्वधिते मैनं हिंसीः । इति क्षुरेणाभिधाय । येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् तेन ब्रह्मणो वपतेदमद्यायुष्माञ्जरदष्टिर्यथाऽसत् अयमसौ अमुकदेवः इति दक्षिणकेशान्ते । प्रागग्रेण दर्भेण ॥ १ ॥ एवं । आर्द्रदानवः स्थ० । ओषधे त्रायस्वैनमिति । येन धाता बृहस्पतिरग्नेरिन्द्रस्य चायुषे वपत् । तेनास्यायुषे वप सुश्लोक्याय स्वस्तये अयमसौ अमुकदत्तः इति पश्चिमकेशान्ते उदगग्रेणदर्भेण ॥ २ ॥ आर्द्रदानवः स्थ० । ओषधे त्रायस्वैनं । स्वधिते मैनं हिंसीः । येन पूषा प्रजापतेरग्नेः सूर्यस्य चायुषे वपत् । तेनास्यायुषे वप सुश्लोक्याय स्वस्तये अयमसौ अमुकच्छन्दः इत्युत्तरकेशान्ते पूर्वाग्रेण दर्भेण० ॥ ३ ॥ आर्द्रदानवः स्थ । ओषधे त्रायस्वैनम् । स्वदिते मैनं हिंसीः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

येन भूयश्च रात्र्यां ज्योक् पश्याच्च सूर्यम् । तेनास्यायुषे वप स्वश्लोक्याय स्वस्तये असावमुकशर्मा इति पूर्वकेशान्ते प्रागग्रेण दर्भेण ॥ ४ ॥ [ इति प्रतिदिशं प्रतिमंत्रं दर्भक्षुरकर्म ] यत्क्षुरेण वर्तयता सुपेशसा वप्तर्वपासि केशान् । शुन्धि शिरो माऽस्यायुः प्रमोषीरिति [ लोहायसं क्षुरं केशवापाय प्रयच्छति ] मा ते केशाननुगात्तेज एतत्तथा धाता दधातु ते । तुभ्यमिन्द्रो बृहस्पतिः सविता वर्च आदधुरिति (प्रपततोऽनुमन्त्रयते सुहृत्परिग्राह्यानुप्यमानान्हरितगोमये समन्त्रचितोति ) उप्त्वाय राज्ञो वरुणस्य केशान्सोमो धाता सविता विष्णुरग्निः । तेभ्यो निधानं बहुधान्वविन्दन्नन्तरा द्यावापृथिवी अपस्युः [ इति प्रागुदीचीं ह्रियमाणाननुमन्त्रयते ] अरिक्ते पर्याश्लेषयते इतिश्रुतिः ॥ बालकं स्नापयित्वा । या आपो दिव्याः ॥ चतुर्गृहीतेनाज्यप्रधानं । ये के च ज्मा । तत ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ कलेवरं ददाति पञ्चमगुणं तिलपिशलं केशवापाय प्रयच्छति

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सर्पिष्मदन्नं ब्राह्मणान्भोजयेत् ॥ इति चूडाकरणम् ॥ ६

अथोपायनम् अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य आदौ पञ्च । न निर्वापः । मेधायै सरस्वत्यै छ न्दोभ्यः उपायनदेवताभ्यः अग्नये वैश्वानराय इदम ज्यमर्पयामि नमः । आज्यभागान्तं हुत्वा ॥ ( तत्रा विद्यारम्भः ॥ ) वसोऽहतं ब्रह्मसूत्रमश्मानं दधि मेखल म् । अजिनं नवनीतं च दण्डं चात्रोपकल्पयेत् ॥ ( स प्तमे वर्षे ब्राह्मणस्योपायनम् । नवमे राजन्यस्य । एका दशे वैश्यस्य आ षोडशाद्ब्राह्मणस्यानतिक्रमः । द्वावि शाद्राजन्यस्य । चतुर्विंशाद्वैश्यस्य । स्नातोप्तकेशे यथं क्रमुपसमाधाय जयप्रभृतिभिर्हुत्वा । ) रेवतीस्त्वा व्यक्ष न्कृत्तिकाश्चकृतुस्त्वा अपसस्त्वा व्यतन्वत धियोऽवयन वन्ना अमृजत्सहस्रमन्तां अभितो दध्नन्ताऽशीतीर्मध्यम वयन्तु नारीरित्यहतं वासोभिमन्त्रयते । ] देवीर्देवाय परि सवित्रे परिधत्त वर्चस इमं शतायुषं कृणोतु जीवा कमिति परिधापयति । जरां गच्छ परिधत्स्व वास

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

भूर्वा पीवानभिशस्तिपावा शतं च जीव शरदः पुरू-
ची रायश्च पूषमुपसंव्ययस्व ॥ परीमं सोमं तेजसे म-
हे श्रोत्राय दध्मसे यथैनं जरसं नयज्ज्योक्श्रोत्राय जाग-
रज्ज्योक्श्रोत्रेऽधिजागरदि (तिब्राह्मणस्य) परीममिन्द्र-
मोजसे महे क्षत्राय दध्मसे यथैनं जरसं नयज्ज्योक्क्षत्राय
जागरज्ज्योक्क्षत्रेधिजागरदि [ति राजन्यस्य] परीमं मनु-
मायुषे महे पोषाय दध्मसे यथैनं जरसं नयज्ज्योक्पोषाय
जागरज्ज्योक्पोषेधिजागरदि [ति वैश्यस्य] परीदं वासो
धियाः स्वस्तये भवा पीवानऽभिशस्तिपावा शतं च
जीव शरदः सवीरो वसूनि चोग्रो विभजस्व जीवन्निति
(परिहितवाससमनुमन्त्रयते) ॥ योगे योगे तवस्तरं वा-
जे वाजे हवामहे । सखायमिन्द्रमूतये ॥ युवा सुवासाः
परिवीत आगात्स उच्छ्रेयान्भवति जायमानः । तंधी-
रासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥
(ततः कुदाचमनम् ।) यज्ञोपवीतमिति "ब्रह्मसूत्रं
परिधापयति" ॥ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्य-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

त्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ यज्ञोपवीतमसि यज्ञस्य त्वोपवीतेनोपनह्यामि ॥ "ततः कृदाचमनम्" ॥ पवित्रपाणिः । आब्रह्मन्निति ललाटे तिलकं कारयित्वा । यदाबध्नन् अग्निमभि दक्षिणमानीय । एह्याश्मानमातिष्ठाश्मेव त्वं स्थिरो भव । कृण्वन्ति विश्वेदेवा आयुष्टे शरदः शतम् । इति "दक्षिणेन पदाश्मानमास्थापयति" मम व्रते हृदयं ते ददामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकव्रतो ज्वषस्व बृहस्पतिस्त्वा युनक्तु मह्यमि(ति नाभिदेशादूर्ध्वं पाणिनोन्मार्ष्टि) ॥ दधि क्राव्णो "इति त्रिर्दधिर्भक्षयित्वा" ॥ दधि क्राव्णो अकारिषं जिष्णो अश्वस्य वाजिनः । सुरभि नो मुखा करत्प्राण आयूंषि तारिषत् ॥ "ब्रह्मचर्यमागामुप मा नयस्वेति वाचयित्वा ॥" [पश्चादग्नेर्दर्भेष्वासीनं कृतपादोपसंगृहणं गुरुः प्रणवं व्याहृतीश्चाध्यापयति] ॥ "अधीहि भोः व्याहृतीर्भवाननुब्रवीतु" ॥ प्रणवस्य ऋषि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ब्रह्मा गायत्रं छन्द एव च । देवोग्निर्व्याहृतिषु च विनियोगः प्रकीर्तितः ॥ प्रजापतेर्व्याहृतयः पूर्वस्य परमेष्ठिनः । व्यस्ताश्चैव समस्ताश्च ब्राह्ममक्षरमोमिति ॥ व्याहृतीनां समस्तानां दैवतं तु प्रजापतिः । व्यस्तानामयमग्निश्च वायुः सूर्यश्च देवताः ॥ छन्दश्च व्याहृतीनामेकाक्षराणामुक्ताख्यं, त्र्यक्षराणामत्युक्ताख्यमि (ति बोधयित्वा । "ओंभूर्भुवःस्वः" [इति त्रिर्वाचयति]। इयं दुरुक्तादि (ति वाचयन्मेखलां त्रिगुणां त्रिप्रदक्षिणामाबध्नाति ।) इयं दुरुक्तात्परिबाधमाना वर्णं पवित्रं पुनती म आगात् । प्राणापानाभ्यां बलमाभजन्ती सखा देवी सुभगा मेखलेयम् ॥ ऋतस्य गोप्त्री तपसस्तरुत्री घ्नती रक्षः सहमाना अरातिम् । सा नः समन्तमनु परेहि भद्रे भर्तारस्ते मेखले मा रिषाम ॥ श्रद्धाया दुहिता तपसोधिजाता स्वसर्षीणां मन्त्रकृतां बभूव । सा मा मेखले परिरेरिहस्व मयि देहि तपइन्द्रियं च ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

(इति वाचयन्मेखलामाबध्नाति) मौञ्जीं त्रिवृतां ब्रा-

ह्मणाय । मौर्वीं धनुर्ज्यां राजन्याय । सौत्रीं वैश्याय”
चित्तस्य समोसि दैव्यो ग्रन्थिरसि मा विसस्त्र (इ-
ति त्रिगुणं प्रवरसंख्यया वा ग्रन्थिं कृत्वा) ॥ “मि-
त्रस्य चक्षुरित्यजिनम्” ॥ मित्रस्य चक्षुर्धरुणं बलाय
तेजो यशस्वी स्थविरं समृद्धम् । अनाहनस्यं वसनं च-
रिष्णु परीदं वाज्यजिनं दधेयमि (ति वाचयन्नैणेयं च-
र्म ब्राह्मणाय प्रयच्छति । वैयाघ्रं राजन्याय । रौरवं वै-
श्याय) ॥ तच्चक्षुरि [त्यादित्यमुपस्थापयति] ॥ तच्च-
क्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं
जीवेम शरदः शतम् ॥ “को नामासीत्युक्ते । अभिवा-
दने प्रोक्ते” । असौ अहं भोरि “ति प्रत्याह” ॥ गु-
रोः पादावुपसंगृह्य ब्रह्मचार्यभिवादयते । यथा । [अ-
भिवादये देवशर्माहं भोः । “इत्येवमभिवादयते” ॥
आयुष्मान्भव सौम्य देवशर्म ३ न् “इति प्रत्यभिवा-
दनम्” ॥] व्यत्यस्तपाणिना कार्यमुपसंगृहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥ सा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

कारश्चास्य नाम्नोन्ते वाच्यः पूर्वाक्षरः प्लुतः। यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ॥ नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां हस्तं गृह्णामि। अमुकस्वामिन्! उपनयेऽसौ सविता ते हस्तमगृहीत् अमुकछन्द! अग्निराचार्यस्तवामुकस्वामिन्। कस्त्वां कमुपनयेऽसौ अमुकशर्मन्! काय त्वा परिदधामि अमुकदेव! कस्य ब्रह्मचार्यऽसि। प्राणस्य ब्रह्मचार्यस्मी "ति प्रत्याह"। एवं। प्रजापतये त्वा परिदधामि। देवाय त्वा सवित्रे परिददामि। बृहस्पतये त्वा परिदधामि अमुकदत्त!॥ देव! सवितरेष ते ब्रह्मचारी तं गोपाय सुदीर्घाय स मा मृत।१। अग्निपुत्रैष ते०।२ वायुपुत्र०।३। सूर्यपुत्र०।४। विष्णुपुत्रैष ते०।५। ब्रह्मपुत्रैष ते०।६।[ततो ब्रह्मचार्यसि "इति पश्चाभिरनुशास्ति बाढमिति प्रत्याह॥] ब्रह्मचार्यसि। अपोशानं कर्म कुरु। दिवा मा सुषुप्सीः। वाचं यच्छ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मेधां मह्य "मिति वाचयति" । मेधां मह्यमङ्गिरसो मेधां सप्तर्षयोऽदधुः । मेधामग्निश्च वायुश्च मेधां धाता दधातु मे । १ । मेधां मे वरुणो राजा मेधामग्निर्दधातु मे । मेधामिन्द्रश्च सूर्यश्च मेधां देवी सरस्वती । २ । या मेधा अप्सरस्सु गन्धर्वेषु च यन्मनः । देवी मानुषी या मेधा सा मामाविशतादिह । ३ । शरीरं मे विचक्षणं वाङ्मे मधुमद्दुहे । निशामितं निशामये मयि श्रुतम् । ४ । यन्मेनूक्तं तद्रमतां शकेयं यदनु ब्रुवे, प्रियाः श्रुतस्य भूयांसं मेधया संविधीमहि । अवृधमहमवृधस्त्वमसौ सौम्य प्राणस्तन्मे, गोपाय ब्रह्मणातदाणीस्थ श्रुतं मे मा प्रहासीत् । ५ । (ततो हस्तौ विमुच्य) । आज्यदर्शनम् ॥ आत्मनोवाङ्० । मेधायै सरस्वत्यै छन्दोभ्यः उपायनदेवताभ्यः अग्नये वैश्वानराय इदमाज्यमर्पयामि नमः ॥ मेधां मह्यमि [ति सप्त प्रधानाहुतीर्वैश्वदेवींच चतुर्गृहीतेनाज्येन जुहुयात] मेधां मह्यमङ्गि । १ । मेधां मे वरुणो राजा । २ । या मेधा अ

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सरःसु । ३ । शरीरं मे । ४ । यन्मेनूक्तं । ५ । छ-
न्दोभ्यः स्वाहा । ६ । उपायनाय । ७ । ये के च ज्मा
। ८ । "क्रतुर्नामधेयेन च यथोपचरितः क्रतुर्भवत्येवं
दोक्तानि सर्वाणि" ॥ पश्चादग्नेर्दर्भेषु प्राङ्ङासीनः प्र-
त्यङ्ङासीनाय तत्सवितुरिति ब्राह्मणाय तां सवितु रिति रा-
जन्याय । "विश्वारूपाणी" ति वैश्याय । सावित्रीं त्रि-
रन्वाह ॥ "अधीहि भोः सावित्रीत्रिजपपूर्वानुपायनब्र-
ह्ममन्त्रान्मे भवाननुब्रवीतु" ॥ विश्वामित्र ऋषिः छन्दो
गायत्रं सविता तथा । देवतोपनये जपे गायत्र्या योग
उच्यते । आवाहयामि गायत्रीं सर्वपापप्रणाशिनीम् ॥
। गायत्र्या परं जप्यं न व्याहृतिसमं हुतम् । आगच्छ
वरदे देवि जपे मे सन्निधौ भव ॥ गायन्तं त्रायसे य-
स्माद्गायत्री त्वं ततः स्मृता । अग्निवायुश्च सूर्यश्च बृह-
स्पत्याप एवच ॥ इन्द्रश्च विश्वे देवाश्च देवताः समुदाहृ-
ताः । एवमार्षं छन्दो दैवतं विनियोगं चानुस्मृत्य ॥ गा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

परिक्षिप्य प्राणायामं कुर्यात् ॥ "ओजोसीति" गा
त्रीमात्राद्य देवानामार्षम् । ओजोसि सहोसि बलमसि भ्रा
सि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि
युरभिभूः ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐत
ॐसत्यं ॥ ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
यो यो नः प्रचोदयादों ॥ पच्छः । अर्धर्चशः । स
मन्ततः ॥ "इति ब्राह्मणस्य" ॥ (तां सवितुर्वरेण्
चित्रामहं वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो
हत्प्रपीनां सहस्रधारां पयसा महीं गाम् "इति राजन्य
॥ विश्वारूपाणि प्रतिमुञ्चते कविः प्रासावीद्भद्रं
चतुष्पदे । विनाकमख्यत्सविता वरेण्योनु प्रयाणमु
विराजति ॥ "इति वैश्यस्य ॥) ॥ " यश्च मेधाव
स्यात्पालाशमेकसरं दण्डं नवनीतेनाभ्यज्य तस्य
यायां प्राङ्मुखं वाचयति" ॥ सुश्रवाः सुश्रवा
यथा त्वं सुश्रवा अस्येवं मा सुश्रवाः सौश्रवसं कु
यथा त्वं सुश्रवो देवानां वेदस्य निधिगोपोसि

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ब्राह्मणानां ब्राह्मणो वेदस्य निधिगोपो भूयांसम् ॥ [इति पालाशं दण्डं ब्राह्मणाय प्रयच्छति ॥ आश्वत्थं राजन्याय । नैयग्रोधं वैश्याय] ॥ स्मृतं च मेति वाचयति ॥ "स्मृतं निन्द्रा च विद्या च श्रद्धा सत्यं तथैवच । मृतं श्रुतं व्रतं चैवमित्यष्टावुभयव्रतम्" । स्मृतं च मे अस्मृतं च मे तन्मे उभयव्रतम् । १ । निन्दा च मे अनिन्दा च मे तन्मे उभयव्रतम् । २ । विद्या च मे अविद्या च मे तन्मे उ० । ३ । श्रद्धा च मे अश्रद्धा च मे० । ४ । सत्यं च असत्यं च० । ५ । मृतं च मे अमृतं० । ६ । श्रुतं च मे अश्रुतं च मे० । ७ । व्रतं च मे अव्रतं च मे तन्मे उभयव्रतम् । ८ । यद्ब्राह्मणस्य ब्रह्माणि व्रतं, यदग्नेः सेन्द्रस्य सप्रजापतिकस्य सर्षिकस्य सपितृकस्य समनुष्यस्य समनुष्यराजन्यस्य सगन्धर्वाप्सरोजनस्कस्य ससर्पेतरजनस्कस्य सौषधिवनस्पतिकस्य सहग्राम्यैश्च पशुभिरारण्यैश्च साकाशस्य सप्रकाशस्य सानूकाशस्य सा तीकाशस्य सह यन्मे आत्म-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

म्यग्ने सर्वव्रतो भवामि ॥ अधीतेहैतेषां वेदानामेकं द्वौ त्रीन्सर्वान्वायमेवं विद्वानुपनयते इतिश्रुतिः ॥ (प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् । प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि ॥ भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः । भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ ऋतुनक्षत्रयागात्प्राग्भैक्षस्याचरणं विदुः । मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ॥ भिक्षेत भिक्षां प्रथमं या चैनं नावमानयेत् ॥ सुवर्णं रजतं वापि सा पात्रे तस्य निक्षिपेत् । समाहृत्य तु तद्भैक्षं यावदर्थममायया । निवेद्य गुरवेऽश्नीयादाचम्य प्रयतः शुचिः ॥ ब्राह्मणस्य धनं भिक्षा क्षत्रियस्य धनुर्धनम् । वैश्यस्य कृषिर्वाणिज्यं शूद्रस्य सेवनं स्मृतम् ॥) भवति भिक्षां देहि । स्वस्त्यस्तु "इति स्त्रीविषये" । भोः भिक्षां देहि । स्वस्त्यस्तु । "इति पुंविषये" ॥ आदौ पितृयज्ञोपवीतं पश्चात्तद्भिक्षा ततः सर्वेषां बान्धवानां च ॥ तत ऋतुतिथ्यादि । ततो ब्रा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सरस्वत्याः छन्दसामुपायनव्रतदेवतानां आत्मनो० आत्म-
नो वा सुतस्य मौञ्जीबन्धननिमित्तं अश्वैर्यविष्टब्राह्मणपूजन-
मर्चामहं करिष्ये ओंकुरुष्व । दक्षिणान्तं । कर्त्रे वरं ददात्यह-
शेषंस्थापयेत् । व्याख्यातं ब्रह्मचर्यम् ॥ इति मौंजीवन्धनम-
न्त्रः पूर्णां दत्वा । विमुच्य । पुनरग्निं परिसमूह्य पर्युक्ष्य ६ ॥
अथ व्रतशिक्षा ॥ ब्रह्मचारी बाढमिति प्रत्याह । ' उपन-
यनप्रभृति व्रतचारी स्याः । मार्गवासाः स्याः, संहतकेशः
स्याः , भैक्षाचर्यवृत्तिः स्याः , सशल्कदण्डः स्याः , सप्त-
मुञ्जां मेखलां धारयेः , न मधुमांसे अश्नीयाः , क्षारलव-
णवर्जी स्याः , आचार्यस्याप्रतिकूलः स्याः सर्वकार्यास्व-
तन्त्रः स्याः , पूर्वोत्थायी स्याः , जघन्यसंवेशी स्याः ,
यत्त्वामुपेयात्तदस्मै दद्याः , बहूनां येन संयुक्तस्तदस्मै द-
द्याः . न प्रविभजेः , नास्य शय्यामाविशेः , न रथमारू-
ढेः , न संवस्त्रयेथाः , सर्वाणि सांस्पर्शकानि स्त्रीभिः सह
वर्जयेः , न मुषितां प्रेक्षेः , न विहारार्थं जल्पेः , न रु-
च्यर्थं किञ्चन धारयेथाः , न स्नायाः , उदकं वाभ्युपेयाः,

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यदि स्नाया दण्ड इवाप्सु परिप्लवेथाः, मुण्डो भव, जटिलो भव, एकशिखी वा भव, सायं प्रातः सन्ध्यामुपासीथाः, तिष्ठः पूर्वामासीथा उत्तराम्, ओंभूर्भुवःस्वरित्युक्त्वा तत्सवितुरिति सावित्रीमनुब्रूयाः, प्रागस्तमयान्निष्क्रम्य समिध आहरेः। हरिणीर्ब्रह्मवर्चसकाम इति श्रुतिः सायं प्रातः सन्ध्यानिःसरणं कर्तव्यम्, भैक्षाचरणं कर्तव्यम्, अग्नीन्धनं कर्तव्यम्, सायमेवाग्नीन्धनमित्येके। भैक्षस्याचरणे दोषः पावकस्यासमिन्धने। सप्तरात्रमकृत्वैतदवकीर्णिव्रतं चरेत्।। सप्तागारं चरेद्भैक्षं स्वकर्म परिकीर्तयन्। तेभ्यो लब्धेन भैक्षेण वर्तयेदेककालिकम्। उपस्पर्शास्त्रिषवणमब्देन स विशुद्धयति।। कामावकीर्णोस्म्यवकीर्णोस्मि कामकामाय स्वाहा। १। कामाभिद्रुग्धोस्म्यभिद्रुग्धोस्मि कामकामाय स्वाहा। २। "इत्यवकीर्णिव्रतम्"। इतिव्रतशिक्षा।। अथ शौचशिक्षा।। उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः। आचारमग्निकार्यं च सन्ध्योपासनमेवच। प्रतिश्रयाद्दक्षिणपश्चिमे

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

क्षिप्तं गत्वा क्षेपमात्रं शरस्य । कृत्वा पुरीषं च शिरोव-
गुण्ठ्य नतु स्पृशेज्जातु शिरः करेण ॥ शुष्कैस्तृणैर्वा का-
ष्ठैर्वा पर्णैः पत्रदलेन वा । सुसंवृते प्रदेशे वा ह्यन्तर्धाय व-
चन्धराम् ॥ मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथादिवा । एका लि-
ङ्गे गुदे तिस्रस्तथा वामकरे दश । उभयोः सप्त दातव्या
मृदः शुद्धिमभीप्सता ॥ एकां लिङ्गे मृदं दद्याद्वामहस्ते
मृत्त्रयम् । उभयोर्हस्तयोर्द्वे तु मूत्रशौचं प्रचक्षते ॥ वि-
गौरमृदः शौचे क्षत्रे रक्ताः प्रकीर्तिताः । हरिद्रवर्णा
रये तु कृष्णाःस्त्रीशूद्रयोः स्मृताः ॥ नाहरेन्मृत्तिकां व-
ाश्च कूलात्सैकतात्तथा । नाखुकृष्टाञ्च वल्मीकात्पांसुलाच्च-
कर्दमात् ॥ न मार्गादूषिराच्चैव शौचशिष्टां परस्य तु ।
तच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥ त्रिगुणं
वनस्थानां यतीनां तु चतुर्गुणम् । कृत्वा मूत्रपुरीषे
खान्याचान्त उपस्पृशेत् ॥ दिवाशौचस्य रात्र्यर्धं प-
ा पादो विधीयते । आर्तः कुर्याद्यथाशक्ति स्वस्थः कृ-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

र्यद्यथोदितम् ॥ इति शौचशिक्षा ॥ अथातः, प्रण
स्य ऋषिर्ब्रह्मेत्यादि सन्ध्योपासनां सर्वां कृत्वा ॥ अथा
परिषिच्य । "अग्नीन्धने परिस्तरणं न स्यात्" ॥ वि
रसीत्य (नुवाकेन तिष्ठन्नग्निमुपस्थापयति ।) (धिष्ण्यान
माङ्गिरसामग्निगणानां चेत्यार्षम् ।) विभूरसि प्रवाहनो व
रसि हविर्वाहनः श्वात्रोसि प्रचेतास्तुथोसि विश्ववेदा
शिगसि कविरङ्गारिरसि बम्भारिरवस्युरसि दुवस्वान्
न्ध्युरसि मार्जलीयः सम्राळसि कृशानुः परिषद्योस्याः स्त
व्यो नभोसि प्रतक्वा सम्मृष्टोसि हव्यसूदन ऋतधामासि
ज्योतिः समुद्रोसि विश्वव्यचा अजोस्येकपादहिरसि बुध्
कव्योसि कव्यवाहनो रौद्रेणानीकेन पाहि माग्ने पिपृ
माग्ने नमस्ते अस्तु मा मा हिंसीः । तत उपविश्य । एधोसि
[समिध आदधाति ।] एधोस्येधिषीमहि "इति प्रथम
समिदसि समिधिषीमहि "इति द्वितीयां" इदमहमग्नौ स
धमभ्यादधाम्यग्ने ! सर्वव्रतो भवामि "इति तृतीयां" इ
इमग्नौ समिधमहार्षं बृहते जातवेदसे स मे श्रद्धां च मेध

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

दीर्घमायुर्जातवेदाः प्रयच्छतु "इति चतुर्थीम्" ॥ तेजोसि तेजो मयि देहीत्यात्मनि । शेषेणोपतिष्ठते ॥ अपो अद्यान्वचारिषं रसेन समगन्महि । पयस्वानग्न आगमत्तं मा संसृज वर्चसा । सं माग्ने! वर्चसा सृज प्रजया च धनेन च । विद्युर्मे अस्य देवा इन्द्रो विद्यात्सहर्षिभिः ॥ तत उपविश्य ॥ ततः प्रातः प्रागुदयाद्द्वादश चतुर्विंशतिमष्टचत्वारिंशतं वा वर्षाणि यो ब्रह्मचर्यं चरति मलज्ञुरबलः कृशः सर्वं स विन्दते स्नात्वा, यत्किञ्चिन्मनसेच्छति, एतेनैव धर्मेण साध्वधीते । अग्निं विमुच्य "इत्यग्नीन्धनम्" ॥ इत्युपायनम् ॥ १० ॥

॥ अथ त्रैविद्यकम् ॥ अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य ॥ आदौ पञ्च ॥ नास्ति निर्वापणम् । छन्दोभ्यः । त्रैविद्यकाय । इदमाज्यमर्पयामि नमः ॥ आज्यभागान्तं ॥ [त्रैविद्यकमाचार्यस्य विधिर्यो वेदमधीते पुरस्ताच्चोपरिष्टाच्चांहोमुग्भिः समिधोभ्यादध्यादुक्तं व्रतोपायनं विमोचनम् ॥ आदौ व्रतालम्बं कुर्यात् ॥ [वसनं मे

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

खलां चर्म दण्डं समिधमेवच । व्रतालम्भं प्रधानं च कु-
र्यात्सर्वव्रतेष्वपि ॥ यद्यस्य विहितं चर्म यत्सूत्रं या च
मेखला । यो दण्डो यच्च वसनं तत्तत्सर्वव्रतेष्वपि ] ॥ रे-
वतीस्त्वा० । इयं दुरुक्तात्० । मित्रस्य चक्षुः० । सुश्रव०
"इति वसनमेखलाजिनदण्डमन्त्रानावर्तयेत्" ॥ यद्देवा
देवहेळनमिति "तिसृभिः समिदादानम्" ॥ यद्देवा देव-
हेळनं देवासश्चकृम वयम् । अग्निर्मा तस्मादेनसो विश्वा-
न्मुञ्चत्वंहसः । १ । यदि दिवा यदि नक्तमेनांसि चकृम
वयम् । वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः । २ य-
दि जाग्रद्यदि स्वप्नमेनांसि चकृमा वयम् । सूर्यो मा तस्मा-
देनसो विश्वान्मुञ्चत्वंहसः । २ । अग्ने व्रतपते "इत्युप-
स्थानम्" ॥ अग्ने व्रतपते व्रतमालभे तत्ते प्रब्रवीमि
तच्छकेयं तेनर्ध्यासम् । १ । वायो व्रतपते व्रतमालभे
तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम् । २ । सूर्यव्रतपते व्र-
तमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम् । ३ । इ-
त्यालभ्य ॥ चतुर्गृहीतेनाज्यप्रधानम् । ये के च ज्मा ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

छन्दोभ्यः स्वाहा । त्रैविद्यकाय स्वाहा ॥ "पश्चादग्नेर्द-
र्भेषु कृतपादोपसंग्रहणं । अधीहि भोः सावित्रीत्रिजपपू-
र्वांस्त्रैविद्यकव्रतमन्त्रान्मे भवाननुब्रवीतु" ॥ ओंभूर्भुवस्स्वस्त०
३ ॥ इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ देवो वः स-
विता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या देव-
भागं प्रजावतीरनमीवा अयक्ष्मा मा वः स्तेन ईशत मा-
घशंसः परि वो रुद्रस्य हेतिर्वृणक्तु ध्रुवा अस्मिन्गोपतौ
स्यात बह्वीर्यजमानस्य पशून्पाहि यजमानस्य पशुपा अ-
सि । १ । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्यामाददे गोषदसि प्रत्युष्टं रक्षः प्रत्युष्टारातिः प्रे-
यमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा उ-
र्वन्तरिक्षं वीहीन्द्रस्य परिषूतमसि माधो मोपरि परुस्त
ऋद्ध्या समाच्छेता तेमारिषत् देवबर्हिः शतवल्शं विरो-
ह सहस्रवल्शा वि वयं रुहेम आदित्या रास्नासीन्द्राण्याः
सन्नहनं पूषा ते ग्रन्थिं ग्रश्नातु स ते मा स्थादिन्द्रस्य त्वा
बाहुभ्यामुद्यच्छे बृहस्पतेस्त्वा मूर्ध्ना हरामि देवङ्गममसि

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तदाहरन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे । २ । वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमयक्ष्मावः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः मधुमद्घृतवत्पिन्वमाना जीवा जीवन्तीरुप वः सदेम मातरिश्वानो घर्मोसि द्यौरसि पृथिव्यसि विश्वधायाः परेण धाम्ना हृतासि माह्वाः साविश्वायुः सा विश्वव्यचा सा विश्वधायाः हुतस्तोको हुतो द्रप्सोनये बृहते नाकाय स्वाहा द्यावापृथिवीभ्यां सम्मृच्यध्वमृतवरी ऊर्मिणा मधुमत्तमा मान्द्रा धानस्य सातयः इन्द्रस्य त्वा भागं सोमेनातनच्म्यदस्तमसि विष्णवे विष्णो हव्यं रक्षस्वापो जागृत । ३ । "इति त्रीननुवाकान्पठेत्" ॥ "यजुर्वेदो भवाननुब्रवीतु ।" अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्, होतारं रत्नधातमम् ॥ अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत, स देवानिह वक्ष्यति ॥ अग्निना रयिमश्नवत्पोषमेव दिवे दिवे, यशसं वीरवत्तमम् ॥ अग्नेयं यज्ञमध्वरं विश्वतः परिभूरसि, स इद्देवेषु गच्छसि ॥ अग्नि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

होता कविक्रतुः सत्यश्चित्रश्रवस्तमः, देवो देवेभिरागमत् यदङ्ग दाशुषे त्वामग्ने भद्रं करिष्यसि, तवेत्तत्सत्यमङ्गिरः ॥ उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम्, नमो भरन्त एमसि ॥ राजन्तमध्वराणां गोपामृतस्य दीदिविम्, वर्धमानं स्वे दमे ॥ स नः पितेव सूनवेऽग्ने सूपयानो भव, सचस्वा नः स्वस्तये ॥ "इत्यृत्त्विक्संहिताग्निसूक्तं पठेत्" "ऋग्वेदो भवाननुब्रवीतु"। अग्न आयाहि वीतये गृणानो हव्यदातये, निहोता सत्सि बर्हिषि ॥ "सामवेदो भवाननुब्रवीतु"। नमो ब्रह्मणे। ३। इति परिधानीयांस्त्रिरन्वाह ॥ तत ऋतुतिथ्यादितंत्रसमाप्तिः ॥ इति त्रैविद्यकमन्त्राः" ॥ ११ ॥

॥ अथोपाकर्म ॥ अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य ॥ चातुष्कोष्ठैस्तरैःपरिस्तीर्य। (उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च। ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः ॥) पृश्न्या पयोसि०। उपाकरणदेवताभ्य इदमाज्यमर्पयामि नमः ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

श्चिद्दर्भाग्रैः [उपयामरहितं] स्रुवं संमृज्य परिस्तीर्य वेदिं। अप्वा नामसीऽत्यष्टौ स्रुवेणाज्याहुतीर्जुहुयात्। अप्वा नामासि तस्यास्ते जोष्ट्रीयं गमेयमहमिद्धमिद्धमेधः परि मेधामृतस्य जगृभ अहं सूर्य इवाजनि स्वाहा॥ १॥ रन्तिर्नामासि तस्यास्ते०।२। युक्तिर्नामासि तस्या०।३। योगो नामासि तस्यस्ते जो०।४। युजे स्वाहा।५। उद्युजे स्वाहा।६। युक्त्यै स्वाहा।७। योगाय स्वाहा।८। अन्तेवासिनां योगमिच्छन्॥ दधि क्राष्णो "इति त्रिर्दधि भक्षयित्वा"॥ पश्चादग्नेर्दर्भेष्वासीनं कृतपादोपसंगृहणं। अधीहि भो सावित्रीत्रिजपपूर्वानुपाकरणव्रतमन्त्रान्मे भवाननुब्रवीतु"॥ ॐभूर्भुवःस्वस्तत्स०॥३॥ इषे त्वोर्जे त्वा "इत्यनुवाकत्रयं पठित्वा"॥ कस्त्वा युनक्तीति घोराणामार्षम्॥ कस्त्वा युनक्ति स त्वा युनक्तु विष्णुस्त्वा युनक्त्वऽस्य यज्ञस्य वै मह्यं सन्नत्यै अध्ययनाय अमुष्मै कामायाऽयुषे त्वा प्राणाय त्वा व्यानाय त्वाऽपानाय त्वा व्युष्ट्यै त्वा रय्यै

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

प्रच्युत्यै त्वा ॥ नमो ब्रह्मणे । ३ । तत ऋषिपूजनम् ॥
संव्वः सृजामि । अश्विनोः प्राण । गायत्र्यै नमः ! ॐभू-
र्भुवः स्व ३ अद्यतावत् । अग्नेः वायोः सूर्यस्य ब्रह्मणः इ-
न्द्रस्य प्रजापतेः भवस्य शर्वस्य ईशानस्य ईश्वरस्य वि-
ष्णोः बृहस्पतेः यजुर्वेदस्य छन्दसां ऋषीणां वेदानां ब्रा-
ह्मणानां सोमानां सोमपानां आचार्याणां विंशतिऋषी-
णां आत्मनो० सुतस्य मौंजीबन्धननिमित्तं विंशतिऋषि-
पूजनमर्चामहं करिष्ये ॐकुरुष्व ॥ एवमेव पष्ट्यासनम् ॥
अग्नये वायवे सूर्याय ब्रह्मणे इन्द्राय प्रजापतये भवाय श-
र्वाय ईशानाय ईश्वराय विष्णवे बृहस्पतये यजुर्वेदाय छ-
न्दोभ्यः ब्राह्मणेभ्यः सोमेभ्यः सोमपेभ्यः आचार्येभ्यः
विंशतिऋषिभ्यो युष्मान्वः पूजयामि ॐपूजय । अग्निं वा-
युं सूर्यं ब्रह्माणं इन्द्रं प्रजापतिं भवं शर्वं ईश्वरं विष्णुं बृ-
हस्पतिं यजुर्वेदं छन्दांसि ऋषीन् वेदान् ब्राह्मणान् सो-
मान् सोमपान् आचार्यान् विंशति ऋषीन् आवाहयिष्या-
मि ॐआवाहय ॥ यथाधिकार्यं ॥ शन्नो देवी । लाजा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

श्च । पाद्यं नमः । पुनः शन्नो देवी । आपः क्षीरं । अग्ने वायो सूर्य ब्रह्मन् इन्द्र प्रजापते भव शर्व ईशान ईश्वर विष्णो बृहस्पते यजुर्वेद छन्दांसि ऋषयः वेदाः ब्राह्मणाः सोमाः सोमपाः आचार्याः विंशतिऋषयः इदं वोऽर्घ्यं नमः । गन्धपुष्पादि दक्षिणांतं ॥ नैवेद्यम् ॥ विमुच्य ॥ अग्नेर्दक्षिणतः स्थाप्याः इत्युपाकरणम् ॥ १२ ॥

अथ चातुर्होत्रकम् ॥ अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पश्च ॥ चातुर्होतृभ्यः छन्दोभ्यः चातुहोत्रकाय जुष्टं निर्वपामि । एवं प्रोक्षामि ॥ आज्यभागान्ते ॥ [अथातः चातुर्होत्रिकं ब्रह्मचारिकल्पेन व्रतमुपैति । संवत्सरमष्टौ मासांश्चतुरो मासान्वा शुद्धपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा ॥ "ब्रह्मचारिणो वसनादिमन्त्रानावर्तयेत्" ] ॥ रेवतीस्त्वा । इयं दुरुक्तात् । मित्रस्य चक्षुः । सुश्रवाः सुश्रवाः ॥ [पूर्वेणाग्निं गोमयलोष्टे षट्पञ्चाशद्भिर्दर्भाङ्कुरैर्ब्रह्मप्रकृतिं दर्भस्तम्बं संस्थाप्य, [illegible] ] ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

संव्वः सृजामि । अश्विनोः । ॐगायत्र्यै नमः । १ । चतुर्मुखाय विद्महे कमण्डलुधराय धीमहि, तन्नो ब्रह्मा प्र २ अद्य तावत् । पृथिव्याः अग्नेः ऋग्वेदस्य ब्रह्मणः छन्दसां । अन्तरिक्षस्य वायोः यजुर्वेदस्य ब्रह्मणः छन्दसां दिवः सूर्यस्य सामवेदस्य ब्रह्मणः छन्दसां दिशां चन्द्रमसः अथर्वणवेदस्य ब्रह्मणः छन्दसां चातुर्वेदेश्वरस्य सानुचरस्य आत्मनो सुतस्य मौञ्जीबन्धननिमित्तं चातुर्वेदेश्वरपूजनमर्चामहं करिष्ये ॐकुरुष्व ॥ एवं षष्ट्यासनम् ॥ पृथिव्यै अग्नये ऋग्वेदाय ब्रह्मणे छन्दोभ्यः । अन्तरिक्षाय वायवे यजुर्वेदाय ब्रह्मणे छन्दोभ्यः । दिवे सूर्याय सामवेदाय ब्रह्मणे छन्दोभ्यः । दिग्भ्यः चन्द्रमसे अथर्वणवेदाय ब्रह्मणे छन्दोभ्यः चातुर्वेदेश्वराय सानुचराय त्वां पूजयामि ॐपूजय ॥ पृथिवीं अग्निं ऋग्वेदं ब्रह्माणं छन्दांसि । अन्तरिक्षं वायुं यजुर्वेदं ब्रह्माणं छन्दांसि । दिवं सूर्यं सामवेदं ब्रह्माणं छन्दांसि । दिशः चन्द्रमसं अथर्वणवेदं ब्रह्माणं छन्दांसि । चातुर्वेदेश्वरं सा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नुचरमावाहयिष्यामि ओंमावाहय ॥ यवान्विकीर्य ॥ आ-
वाहयाम्यहं देवं ब्रह्माणं कमलोद्भवम् । कमण्डल्वक्षसू-
त्राभ्यामन्वितं हंसवाहनम् ॥ रक्तवर्णो । ब्रह्मा देवानां॥
पाद्यं नमः । पुनः शन्नो देवी । आपः क्षीरं । पृथिवि अग्ने
ऋग्वेद ब्रह्मन् छन्दांसि । अन्तरिक्ष वायो यजुर्वेद ब्रह्मन्
छन्दांसि । द्यौः सूर्य सामवेद ब्रह्मन् छन्दांसि । दिशः
चन्द्रमाः अथर्वणवेद ब्रह्मन् छन्दांसि चातुर्वेदेश्वर सानु-
चर इदं वोर्घ्यं नमः । गन्धपुष्पादि नैवेद्यान्तम् ॥ [हिर-
ण्यवर्णा इति चतुसृभिः समिधोऽभ्यादध्यात्]॥ हिरण्य-
वर्णाः शुचयः० । १ । यासां देवा० । २ । यासां राजा०
। ३ । शिवेन मा० । ४ । "पाणी प्रक्षाल्य" ॥ अग्ने व्रत-
पते इत्युपस्थापयति ॥ अग्ने व्रतपते व्रतमालभे तत्ते प्रब्र-
वीमि तच्छकेयं तेनर्ध्यासम् । १ । वायो व्रतपते० । २ ।
सूर्य व्रतपते० । ३ । ब्राह्मणा व्रतपतयो व्रतमालभे तद्वः
प्रब्रवीमि० । ४ ॥ अथ व्रतहोमः ॥ [प्रधानानि स्थाली-
पाकस्य, चतुर्गृहीतैश्चतुर्होतृभिराज्येन तेजस्कामो, या-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

वकेन पशुकामोऽन्नाद्येन वीर्यकामोपि पयसि स्थालीपाकं श्रपयित्वा, ब्रह्मवर्चसकामो मनसैकैकं हुतमनुमन्त्रयते] "चितिः स्रुक्चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतो अग्निर्विज्ञातमग्निर्वाचस्पतिर्होता मन उपवक्ता प्राणो हविः सामाध्वर्युरिन्द्रं गच्छ स्वाहा। १। मनसा, चितिः स्रु"गित्यनुमन्त्रयते" ॥ पृथिवी होता द्यौरध्वर्युस्त्वष्टाग्निर्मित्र उपवक्ता वाचस्पतेर्वाचो वीर्येण सम्भृततमेन यक्ष्यसे यज्ञपतये वार्यमाऽऽस्वस्करो वाचस्पतिः सोमं पिबतु जजनदिन्द्रमिन्द्रियाय स्वाहा सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः श्रातास्त इन्द्र सोम वातापे हवनश्रुतः स्वाहा। २। मनसा, "पृथिवी होता"॥ अग्निर्होताश्विनाध्वर्यू रुद्रोग्निर्बृहस्पतिरुपवक्ता वाचस्पते हृद्विधेनामन्वाचस्पतिः सोममपादस्मासु नृम्णं धात् स्वाहा सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः श्रान्तास्त इन्द्र सोम वातापे हवनश्रुतः स्वाहा। ३। मनसा, "अग्निर्होता"॥ वाग्घोता वातोध्वर्युर्दीक्षा पत्न्यापोभिगरो मनो हविस्तपसे जुहोमि

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

वाचस्पतेऽच्छिद्रया वाचाऽच्छिद्रया जुह्वा दिवि देवा मृधद्धोता मैरयस्व स्वाहा । ४ । मनसा, "वाग्घोता" ॥ महाहविर्होता सत्यहविरध्वर्युरचित्तपाजा अग्निदचित्त मन उपवक्ता नाधृष्यश्चाप्रतिधृष्यश्चाभिगरा अयास्य उद्गाता वाचस्पते विधे नामन्विधेम ते नाम विधेस्त्वमस्माकं नाम मा देवानां तन्तु च्छेदि मा मनुष्याणां स्वाहा । ५ । मनसा "महाहवि" ॥ छन्दोभ्यः स्वाहा । ६ । मनसा । चातुर्होतृकाय स्वाहा । ७ । मनसा । यद्वेदव्रतं तदत्र व्रतं, विकारानतुक्रमिष्यामः ॥ ब्रह्मचारी "बाढमिति" प्रत्याह ॥ ब्रह्मचार्यसि, अपोशानं कर्म कुरु, दिवा मा सुष्वप्सीः, वाचं यच्छ, न चतुर्भिः सहासीथाः, न चतुर्णां समक्षं भुञ्जीथाः, न चतुर्भिः सह भुञ्जीथाः, एकतमो वा भुञ्जीथाः ॥ "पश्चादग्नेर्दर्भेषु० । अधीहि भोः सावित्रीत्रिजपपूर्वांश्चातुर्होतृकव्रतमन्त्रान्मे भवाननुब्रवीतु" ॥ ओंभूर्भुवः स्वस्तत्सवितुः० ॥ चित्तिः स्रुक् । १ । पृथिवी होता । २ । अग्निर्होता । ३ । वाग्घोता । ४ । महाहवि । ५ । छन्दोभ्ये

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नमः ।६। चातुर्होतृकाय नमः ।७। इति वाचयित्वा, नमो ब्रह्मणे "इति त्रिर्वाचयेत्" ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ इति चातुर्होतृकम् ॥ १३ ॥

अथापवर्गः । अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पश्च । चातुर्होतृभ्यः, छन्दोभ्यः, अपवर्गे चातुर्होतृकाय जुष्टं निर्वपामि । एवं प्रोक्षामि । आज्यभागान्ते । रेवतीस्त्वा "इत्यादि वसनादीननुमन्त्रयेत् ।" चितिः स्रुगिति सप्तप्रधानाहुतीर्जुहुयात् चितिः स्रुक् ॥ १ ॥ (मनसा) पृथिवी होता ॥ २ ॥ (मनसा) अग्निर्होता ॥ ३ ॥ (मनसा) वाग्घोता ॥ ४ ॥ ॥ (मनसा) महाहवि ॥ ५ ॥ (मनसा) छन्दोभ्यः स्वाहा ॥ ६ ॥ (मनसा) अपवर्गे चातुर्होतृकाय स्वाहा ॥ ७ ॥ (मनसा) प्रधानान्तरं समिदाधानम् । हिरण्यवर्णाः शुचयः ॥ १ ॥ यासां देवा ॥ २ ॥ यासां राजा ॥ ३ ॥ शिवेनमा ॥ ४ ॥ अग्ने व्रतपते "इत्युपस्थाय व्रतं विसृजेत् । तत उपस्थानम् ।"

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अग्ने व्रतपते व्रतमाचारिषं तदशकं तत्ते प्रब्रूमस्तन्नो गोपाय ॥ १ ॥ एवं वायो ॥ २ ॥ सूर्य ॥ ३ ॥ ब्रह्मणा व्रतपतयो व्रतमचारिषं तदशकं तद्वः प्रब्रूमस्तन्नो-गोपाय ॥ ४ ॥ तत ऋतुतिथ्यादितन्त्रसमाप्तिः । नात्र व्रतादेशः । न चातुर्होतृकमन्त्रोपदेशः । इति चातुर्होतृकापवर्गः ॥ १४ ॥

अथ प्रवर्ग्यव्रतम् । अथात्र व्रतविधिः । (सर्वत्र रहस्यमन्त्रप्रयोगे प्रपत्ति मार्जनं चोर्ध्वं वेदव्रतादविच्छिन्नं प्रवर्ग्यव्रतं चरिष्यंस्त्रीणि वर्षाणि द्वे संवत्सरं वापराह्णेधिवृत्तसूर्ये ग्रामस्यासकाशे उदकान्तेग्निं प्रज्वाल्य तत्रादौ पूर्वेद्युकर्म तस्मिन्नग्नौ परिसमूह्य पर्युक्ष्य । नमो वाचे इति प्रावर्गिकीं पूर्वांशान्ति पठेत् ॥) पुनरग्निं परिसमूह्य पर्युक्ष्य । शुक्रियं रुद्रस्य । नमो वाचे नमो वाचस्पतये या वागुदिता या चानुदिता तस्यै वाचे नमः, नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रविद्भ्यो मा मा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मृषयो मन्त्रकृतो मन्त्रविदः परादुर्दैवीं वाचमुद्यासं शि-

वामजस्त्रां जुष्टां देवेभ्यः स्वधावतीं पितृभ्यः शुश्रूषेण्यां मनुष्येभ्यः तं मा देवा अवन्तु शोभायै पितरोनुमदन्तु सुचक्षामहमक्षिभ्यां सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासं, ओंभूर्भुवःस्वः, प्राच्या त्वा दिशा अग्निना देवतया गायत्रेण च्छन्दसा वसन्तमृतुं प्रविशामि । दक्षिणया त्वा दिशा इन्द्रेण देवतया त्रैष्टुभेन च्छन्दसा ग्रीष्ममृतुं प्रविशामि । प्रतीच्या त्वा दिशा सवित्रा देवतया जागतेन छन्दसा वर्षामृतुं प्रविशामि । उदीच्या त्वा दिशा मित्रावरुणाभ्यां देवतयाऽनुष्टुभेन च्छन्दसा शरदमृतुं प्रविशामि । ऊर्ध्वया त्वा दिशा बृहस्पतिना देवतया पांक्तेन च्छन्दसा हेमन्तमृतुं प्रविशामि । अनया त्वा दिशा प्रजापतिना देवतया अनाप्तेन च्छन्दसा शिशिरमृतुं प्रविशमि ॥ गायत्रं च्छन्दः प्रविशामि, त्रिष्टुभं च्छन्दः प्रविशामि, जगतीं च्छन्दः प्रविशामि, अनुष्टुभं च्छन्दः प्रविशामि, पांक्तिं च्छन्दः प्रविशामि, अतिच्छन्दसं च्छन्दः प्रविशामि । च्छ-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

न्दांसि प्रविशामि । तानि नः पारयन्तु तानि नोऽवन्तु तानि स ऋच्छतु योस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ आपो अस्मात्प्रविशन्तु आपो अस्मासु जागृत आयुर्विश्वायुर्विश्वमायुर्व्यश्नवै सर्वमायुर्व्यश्नवै, दिव्यो गन्धर्वो भुवनस्य यस्पतिरेकाव्यो मनसा विद्वोऽड्यः, तन्त्वा यामि ब्रह्मणा देवदैव्यं नमस्ते अस्तु दिवि ते सधस्थम्, दिविपृष्टो यजतः सूर्यत्वगवयाता हरसो दैव्यस्य एकाव्यो मनुष्यः सुशेवः, मृळाद्गन्धर्वो भुवनस्य यस्पतिरनवद्याभिः समजग्माभिरप्सरःस्वपि गन्धर्व आसीत् समुद्र आसां सदनं व आहुस्ततः सद्या च परा च चरन्त्यग्निर्येदिद्युर्नक्षत्रियेयाः, विश्वावसुं गन्धर्वं सपघ्रे ताभ्यो नमो अस्तु ता नो मृळयन्तु ता नः शर्म यच्छतु ता यं द्विष्मो यश्च नो द्वेष्टि तमासां जम्भे दध्मः, आहुस्ते भग चक्षुषी ताभ्यां विपश्य मामऽभि यदेतत्सारघं मधु तेन रूपमनज्मि ते तेन [illegible]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

र्बाहुभ्यां पूष्णो हस्ताभ्यां देवानां ऋतुभिर्देवाभ्यञ्जनै-रभ्यञ्जे भगवन्नामासि, तस्य ते ऋचश्च यजूंषि च सामानि च वागग्ना अन्यच्चक्षुः सूर्येऽन्यत्सूर्येऽन्यदग्नौ अन्यद्भगवान्भूयासम्, ऐन्द्रोसि चक्षुरसि श्रोत्रमासि पुर-न्ध्रिर्नाम वागसि येन शतक्रतुभागमुपजुह्वे तेन त्वोपह्व-ये भग, तद्वानरासनयेदं स उग्रमाविष्कृणोमि तन्यत्त-न्न वृष्टिम्, दधृङ्ह्यमध्वाथर्वाणो वामस्य शीर्ष्णा सु-मतिमवोचत्, अग्निरीशेव सव्यस्याग्निर्महः सौभगस्य तान्यस्मभ्यं विरासते॥ इति प्रावर्ग्यिकी पूर्वा शान्तिः॥ उदयन्तमित्युपस्थानम्। उदयन्तमसस्परि ज्योतिष्पश्य-न्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥ "उष्णीषं त्रिरावर्तं वेष्टयित्वा" शुक्रियं रुद्रस्य। आ-युर्दा आयुर्मे देहि आयुषे नः पुनर्देहि, प्राणदा प्राणं मे देहि आयुषे नः पुनर्देहि, व्यानदा व्यानं मे देहि आयुषे नः पुनर्देहि, अपानदा अपानं मे देहि आयु-षे नः पुनर्देहि, चक्षुर्दा चक्षुर्मे देहि आयुषे नः पु-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नर्देहि, श्रोत्रोदा श्रोत्रं मे देहि आयुषे नः पुनर्देहि, वर्चोदा वर्चो मे देहि आयुषे नः पुनर्देहि । "एतानि सप्त यजूंषि । सप्तानामपि चायुषे नः पुनर्देहि । इति साधारणोनुषङ्गः ॥" नमो रुद्राय दिविषदे यस्य वर्षमिषवस्तस्मै नमस्ते नमः समरे स मा मा हिंसीः । नमो रुद्रायाऽन्तरिक्षषदे यस्य वात इषवस्तस्मै नमस्ते नमः समरे स मा मा हिंसीः । नमो रुद्राय पृथिवीषदे यस्यान्नमिषवस्तस्मै नमस्ते नमः समरे स मा मा हिंसीः ॥ ब्रह्मण उपस्तरणमासि ब्रह्मणे त्वोपस्तृणामीळायै वास्त्वसि वास्तुमद्वास्तुमान्भूयासमवास्तुः स भूयाद्योस्मान्द्वेष्टि यं च वयं द्विष्मः । प्रतिष्ठासि प्रतिष्ठा मे भूयादप्रतिष्ठाः स भूयाद्योस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ आवातवाहि भेषजं विवातवाहि यद्रपः । त्वं हि विश्वभेषजो देवानां दूत ईयसे । यददो वा ततो गृहेऽमृतस्य निधिर्हितः । ततो नो धेहि जीवसे ततो नो अभयंकृधि । द्युभिरक्तुभिः परिपातुमस्मानरिष्टभिर-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

श्विना सौभगेभिः । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवीमुत द्यौः ॥ पृथिवी शान्तिरन्तरिक्षं शान्तिर्द्यौः शान्तिर्दिशः शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिस्तयाहं शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे शान्तिं करोमि शान्तिर्नो अस्तु शान्तिरसि शान्तिः शान्तिः शान्तिः । या वागुदिता याचानुदिता शिवा नः शन्तमा भव सुमृळीका सरस्वति मा ते व्योम सन्दृशे । मित्रस्य त्वा चक्षुषा प्रेक्षे मित्रस्य त्वा चक्षुषान्वीक्षे, सूर्यस्य त्वा चक्षुषा प्रेक्षे सूर्यस्य त्वा चक्षुषान्वीक्षे 'अभिवीक्ष्य' ॥ मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि द्युम्नं चित्रश्रवस्तमम् । मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि सत्यं चित्रश्रवस्तमम् ॥ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन, महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयते ह नः, उशतीरिव मातरः । तस्मा अरंगमाम वो यस्य क्षयाय जिन्वथ, आपो जन-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यथा च नः ॥ आपः पृणीत भेषजं वरूथं तन्वो मम, ज्योक्च सूर्य्यं दृशे । शन्नो देवीरभिष्टये आपो भवन्तु पीतये, शँय्योरभिस्रवन्तु नः । शन्नो मित्रः शँ वरुणः शन्नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः ॥ शन्नो मित्रः शं वरुणः शन्न अस्त्वर्यमा । शन्न इन्द्रश्चाग्निश्च शन्नो विष्णुरुरुक्रमः ॥ त्यमूषु वाजिनं देवजूतं सहवानन्तरुतारं रथानाम् । अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिवाहुयेम ॥ कया नश्चित्र आभुवदूती सदावृधः सखा, कया शचिष्ठया वृता । कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः, दृढा चिदारु जीवसे । अभिषुणः सखीनामविता जरितॄणाम्, शतं भव स्यूतिभिः । "शुक्रियं रुद्रस्य ।" य उदगात्पुरस्तान्महतो अर्णवाद्विभ्राजमानः सरिरस्य मध्ये । स मामृषभो रोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु । यद्ब्रह्मवादिष्म तस्मा हिंसीत्सर्याय विभ्राजाय वै नमो ऊमः ॥ इति

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

प्रावर्ग्यिकी उत्तरा शान्तिः ॥ अग्निं परिषिञ्चामि । विभूरसीत्यादि । एतेनैव धर्मेण साध्वधीते "इत्यन्तं" नमो वाचे । "पूर्वां शान्तिं पठित्वा ।" उष्णीषं निवार्य । इयं कन्या, अयं वत्सः, अयमादित्यः, इदं क्षीरोदनम् । आयुर्दा इत्युत्तरां शान्तिं पठेत् ॥ विमुच्य । इति पूर्वेद्युकर्म ॥ २ ॥ पुनरग्निं परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च । उत्तरतः संस्तीर्य स्रुचं पूरयित्वा ॥ नमो वाचे । सावित्राणि । ब्रह्मणे, प्रजापतये, घर्मायसम्राजे, सूर्याय विभ्राजे, देवेभ्यो घर्मपेभ्यः, पितृभ्यो घर्मपेभ्यः, छन्दोभ्यः, प्रवर्ग्यव्रताय ८ जुष्टं निर्वपामि ॥ आयुर्दा । विष्णुर्मनसेति । नमो वाचे । सावित्राणि । ब्रह्मणे० । ८ जुष्टं प्रोक्षामि । आयुर्दा आज्यदर्शनं । आज्यभागान्ते । रेवतीस्त्वा इत्यादि वसनादीननुमन्त्रयेत् ॥ नमो वाचे । ततः समिदाधानम् । पृथिवी समित्तामग्निः समिन्धे तामहं समिन्धे सा मा समिद्धा सुषमिद्धा तेजसा व-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

र्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात् ॥ १ ॥ अन्तरिक्षं समित्तां वायुः समिन्धे ता० ॥ २ ॥ द्यौः समित्तां सूर्यः समिन्धे० ॥ ३ ॥ पाणी प्रक्षाल्य । अग्ने व्रतपते सम्राळसि व्रतपा असि व्रतभृदसि व्रतपतिरसि व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनाध्यासम् ॥ १ ॥ वायो व्रतपते० ॥ २ ॥ सूर्य व्रतपते० ॥ ३ ॥ "उदुत्यमिति दशर्चेन प्रथमेन प्रतीकानुवाकेन स्रुवेण प्रत्यृचमाज्यं जुहुयात् ।" उदुत्यञ्जातवेदसं देवं वहन्ति केतवः, दृशे विश्वाय सूर्यम् ॥ १ ॥ इमसूपत्नमस्मभ्यं सनिं गायत्रं नवीयांसम्, अग्ने देवेषु प्रावोचत् ॥ २ ॥ समिन्द्रेन मनसा नेषे गोभिः संसूरिभिर्हरिवः संस्वस्त्या । संब्रह्मणा देवकृतं यदस्ति सं देवानां सुमत्या यज्ञियानाम् ॥ ३ ॥ सं वर्चसा पयसा सन्तनूभिरगन्महि मनमा सं शिवेन । त्वष्टा सुदत्रो विदधातु रायो नुनोमार्ष्टुतन्वो यद्विलिष्टम् ॥ ४ ॥ अन्वग्निरुषसामग्रमख्युदन्वहानि प्रथमो जातवेदाः । अ-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नु सूर्यस्य पुरुत्रा च रश्मीरनु द्यावापृथिवी आततन्थ ॥ ५ ॥ यावाङ्कशा मधुमत्याश्विनौ सूनृतावती, तया यज्ञं मिमिक्षताम् ॥ ६ ॥ धाता दधातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत् ॥ ७ ॥ धाता प्रजानामुत राये ईशिषे धातेदं विश्वं भुवनं जजान । सन्दाशुषे किरति भूरिवासं वयं स्याम पतयो रयीणाम् ॥ ८ ॥ त्रयस्त्रिंशत्तन्तवो यान्वितन्वत इमं यज्ञं स्वधया ये दधन्ते । तेषां च्छिद्रं प्रतिदध्मो यदत्र स्वाहाऽयं यज्ञो अप्येतु देवान् ॥ ९ ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्, समूढमस्य पांसुरे ।१०। (उक्तं स्थालीपाकस्य व्रतहोमः । ) ब्रह्मणे स्वाहा, प्रजापतये स्वाहा, घर्मायसम्राजे स्वाहा, सूर्याय बिभ्राजे स्वाहा, देवेभ्योघर्मपेभ्यः स्वाहा, पितृभ्योघर्मपेभ्यः स्वाहा, छन्दोभ्यः स्वाहा, प्रवर्ग्यव्रताय स्वाहा, ॥ "पश्चादग्नेदर्भेष्वासीनं कृतपादोपसंग्रहणं सावित्रीत्रिजपपूर्वं शुक्रियप्रथमानुवाकमध्याप्यानुशास्ति ॥ अधीहि भोः सावित्री-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

त्रिजपपूर्वान्प्रवर्ग्यव्रतमन्त्रान्मे भवाननुब्रवीतु ।" ओंभूर्भुवःस्वस्तत्स० ३ । शुक्रियं रुद्रस्य । युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । विहोत्रा दधे वायुना विधेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नारीःस्थ ॥ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा । प्रैतु ब्रह्मणस्पतिः प्रदेव्येतु सूनृता, अच्छावीरन्तुर्यं पंक्तिराधसन्देवा यज्ञं नयन्तु नः । देवी द्यावापृथिवी देवयजनेनुनेमांसाथामृतस्यध्यासमद्य मखस्य शिरो मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ १ ॥ एवं । इयत्यग्रआसीर्ऋतस्यध्यासमद्य म० ॥ २ ॥ देवीवः प्रियोस्य भूतस्य प्रथमजाऋतस्यध्यासमद्य० ॥ ३ ॥ इन्द्रस्यौजोसि ऋतस्यध्यासमद्य० ॥ ४ ॥ प्रजापतेस्तनूरस्यऋतस्यध्यासमद्य० ॥ ५ ॥ मधु त्वा मधुना करोतु यज्ञस्य पदे स्थः, गायत्रोसि त्रैष्टुभोसि जागतोसि म-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

खोसि मखस्य रास्नासि सूर्यस्य हरसाश्रय विष्णुर्निष्पदोसि प्राजापत्यं देवानां त्वा पत्नी वृष्णो अश्वस्य निष्पदा धूपयन्तु अर्चिषे त्वा शोचिषे त्वा हरसे त्वा, मित्रस्यचर्षणीधृतः श्रुवो देवस्य सानसि द्युम्नं चित्रश्रवस्तमम्, देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः सुबाहुरुत शक्त्या। अव्यथमानाः पृथिव्यामाशा दिश आपृण उत्तिष्ठ बृहद्भवोर्ध्वस्तिष्ठ ध्रुवस्त्वम्॥ इदमहममुमामुष्यायनममुष्याः पुत्रं तेजसा ब्रह्मवर्चसेन समर्धयामि। इदमहममुममुष्यायनममुष्याः पुत्रं तेजसा ब्रह्मवर्चसेन व्यर्धयामि। इदमहममुममुष्यायनममुष्या पुत्रमोजसा वीर्येण समर्धयामि इदमहममुममुष्यायनममुष्याः पुत्रमोजसा वीर्येण व्यर्धयामि। इदमहममुममुष्यायनममुष्याः पुत्रमूर्जं पशुभिः समर्धयामि। इदमहममुममुष्यायनममुष्या पुत्रमूर्जः पशुभिर्व्यर्धयामि। इदमहममुममुष्यायनममुष्या पुत्रं तेजसा ब्रह्मवर्चसेन, ओजसा वीर्येण, ऊर्जः पशुभिरन्नाद्येन समर्धयामि। अजये त्वा साधवे त्वा सुक्षित्यै त्वा

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सूर्यस्य त्वा चक्षुषान्वीक्षे, छृणत्तु त्वा वाक् छृणत्तु त्वो-र्क् छृणत्तु त्वा पयः छृणत्तु त्वा रसः छृणत्तु त्वा हविः छृणत्तु त्वा सोमः छृणत्तु त्वा यज्ञः छृणत्तु त्वा ब्रह्मा छृणत्तु त्वा प्रजापतिः ॥ यद्वेदव्रतं तदत्र व्रतं ब्रह्मचारी बाढमिति प्रत्याह । 'पञ्च त्रिकाराननुक्रमिष्यामः ।' ब्रह्मचार्यसि अपोशानं कर्म कुरु, दिवा मा सुष्वप्सीः, वाचं यच्छ, मा मलवद्वाससोद्राक्षीः, मा सम्भाषयेथाः, मलवद्वाससो भवन्ति, उदक्या सूतिका श्वपाकाऽशुचयोऽन्त्यावसायिन इति, न श्मशानं गच्छेः, न शवशरीरं पश्येः, अनातृणं शवशरीरं दृष्ट्वा त्रिरात्रमुपवासेः, न मधुमांसे प्राश्यालभ्य वा शरीरं पुनर्व्रतमालभेथाः, यानि हविर्दूषणानि तानि भोजनदूषणानि, नोच्छिष्टं भुञ्जीथाः, नोच्छिष्टमन्यस्मै दद्याः मा गुरोर्भुञ्जीथाः, व्याधितविषयमेतत् । येनेच्छेत्तेन चिकित्सेत्, कामं गुरूच्छिष्टमश्नीयादिति ह्याचार्याः । न नक्तं भुञ्जीथाः, उपज्वल्य वा भुञ्जीथाः,

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

न मृन्मये भुञ्जीथाः, न प्रतिसन्दद्या इत्येके । स्थानासनं पर्वान्तेषूपवासः, वाग्यमनं च, कंचिदप्रयतं दृष्ट्वा प्राणायामैः स शुद्ध्यति, सन्दर्शने त्रयः कार्याः संव्याहृत्य तु सप्त, समासाद्य तु द्वादश, सर्वत्र ज्योतिर्दर्शनमुदकोपस्पर्शनम्, सूर्याचन्द्रमसौ गौरग्निर्ब्राह्मणा इत्येतानि पञ्चज्योतींष्येतेषामेकेनापि शुद्ध्यति, अवद्धं मनो दरिद्रं चक्षुः, सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हिंसीरिति [सूर्यं दिवाग्निं रात्रौ रेतसि स्कन्ने, पुनर्मा मैत्विन्द्रियमिति जपेत् ॥] ओं पुनर्मा मैत्विन्द्रियं पुनरायुः पुनर्भगः । पुनर्ब्रह्मणमैतु मा पुनर्द्रविणमैतु मा ॥ यन्मेद्य रेतः पृथिवीमस्कान्यदोषधीरप्य सरद्यदपः, तदहं पुनराददे ॥ यन्मे रेतः प्रसिच्यते यन्म आजायते पुनः । यद्वा मे प्रतितिष्ठति तेन मामम्मृतं कुरु तेन सुप्रजसं कुरु ॥ नमो ब्रह्मणे "इति त्रिः पठेत् ।" आयुर्दा । ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ इति प्रवर्ग्यव्रतम् ॥ १५ ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अथापवर्गे प्रवर्ग्यव्रतम् ॥ आदौ पूर्वेद्युकर्म । अग्निं परिसमूह्य पर्युक्ष्य ॥ नमो वाचे । उदयन्तमुपस्थाय । उष्णीषं त्रिरावर्तं वेष्टयित्वा । आयुर्दा । परिषिञ्चामि । विभूरसि० एतेनैव धर्मेण साध्वधीते "इत्यन्तं ।" नमो वाचे । उष्णीषं निवार्य । इयं कन्या० । आयुर्दा ॥ विमुच्य । इति पूर्वेद्युकर्म ॥ ६ ॥ अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च । उत्तरतः संस्तीर्य स्रुचं पूरयित्वा । नमो वाचे । सावित्राणि । ब्रह्मणे प्रजापतये घर्माय संम्राजे सूर्याय विभ्राजे देवेभ्यो घर्मपेभ्यः पितृभ्यो घर्मपेभ्यः छन्दोभ्यः अपवर्ग्यें प्रवर्ग्यव्रताय जुष्टं निर्वपामि ॥ आयुर्दा । विष्णुर्मनसेति । नमो वाचे । सावित्राणि । ब्र० प्र० ॥ ८ ॥ जुष्टं प्रोक्षामि ॥ आयुर्दा । पात्राणि च तूष्णीं । आज्यभागान्ते ॥ रेवतीस्त्वा इत्यादि वसनादीननुमन्त्रयेत् ॥ नमो वाचे । ("मा नो घर्मो" इत्येकोनत्रिंशद्भिरुत्तमेन प्रतीकानुवाकेन प्रत्यृचमाज्यं जुहुयात् ॥)

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

शुक्रियं रुद्रस्य । मा नो घर्मो व्यथितो विव्यथ नो मा नः परमधाममाहुतोनैः । मोऽन्त्रसांस्तमस्यन्तरा धामा रुद्रियासो अभिकुर्वतो नः ॥ १ ॥ मा नः क्रतुभिरीळतेभिद्विषो अस्मान्स्वनीते मापरादाः । मा नो अग्निर्निर्ऋतिर्मो अरातिर्मानो द्यावाऽपृथिवी हेळयेथाम् ॥ २॥ अनु नो मित्रावरुणा इहावतामन्वादीध्याना अभि नः सखायौ । आदित्यानां प्रसूतिर्हेतिरुग्रा शिवाः काष्टा हविषः परि णो वृणक्तु ॥ ३ ॥ विधुर्दद्राणां समने बहूनां युवानं सन्तं पलितो जगार । देवस्य पश्य काव्यं महि त्वा द्यां समानसद्यः समानः ॥ ४ ॥ ओं भूः ॥ ५ ॥ ओंभुवः ॥ ६ ॥ ओंस्वः ॥ ७ ॥ ओं भूर्भुवःस्वः ॥ ८ ॥ उदुत्यं जातवेदसं देवं वहन्ति केतवः, दृशे विश्वाय सूर्यम् ॥ ९ ॥ उद्वयन्तमसस्परि० ॥ १० ॥ उदुत्तिष्ठस्वध्वरावनो दिव्या कृपा दृशे च भासा । बृहता स्वशुक्वभिरग्ने याहि स्वशास्तिभिः ॥ ११ ॥ ऊर्ध्व ऊषणा ऊतये तिष्ठा देवो न सविता ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ।१२
पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यंहसः
॥ १३ ॥ सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया,
विश्वपत्न्या विश्वतस्परि ॥ १४ ॥ धाता दधातु नो
रयिमीशानो जगतस्परि, स नः पूर्णेन वावनत् ।१५।
धाता प्रजानामुत राये ईशिषे धातेदं विश्वं भुवनं ज-
जान । सन्दाशुषे किरति भूरिवासं वयं स्याम पतयो
रयीणाम् ॥ १६ ॥ अग्न आयूंषि पवस आसवोर्जमि-
षञ्च नः, आरे बाधस्व दुच्छुनाम् ॥ १७ ॥ अग्ने प-
वस्व स्वपा अस्मे वर्चः सुवीर्यम्, दधद्रयिं मयि पोषम्
॥ १८ ॥ तन्नो अग्ने वरुणस्य विद्वा० ॥ १९ ॥ स
त्वन्नो अग्नेवमोभवती नेदिष्टो० ॥ २० ॥ वायुरग्रेगा
यज्ञप्रीस्साकं गर्मनसा यज्ञम्, शिवो नियुद्भिः शिवाभिः
॥ २१ ॥ प्रयाभिर्यासि दाश्वंसमच्छानियुद्भिर्वाय इष्टये
दुरोणे । निनो रयिं सुभोजसंयुवस्वानिवीरं गव्यमश्वं च
राधः ॥ २२ ॥ हिरण्यगर्भः ॥ २३ ॥ यः प्राणतो

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

॥ २४ ॥ य ओजदा ॥ २५ ॥ येन द्यौ ॥ २६ ॥ य इमे द्या ॥ २७ ॥ यस्येमे विश्वे ॥ २८ ॥ यं क्रन्दसी अवासा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने । यत्राधिसूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ २९ ॥ "उक्तं स्थालीपाकस्य व्रतहोमः ।" व्र० अ० घ० सू० दे० पि० छ० अपवर्ग्ये प्रवर्ग्यव्रताय । "द्यौः समित्तामिति समिध आदाय ।" द्यौः समित्तां सूर्यःसमिन्धे तामहं समिन्धे सा मा समिद्धा सुषमिद्धा तेजसा वर्चसा यशसा ब्रह्मवर्चसेन समिन्ध्यात् ॥ १ ॥ अन्तरिक्षं समित्तां वायुः समिन्धे ॥ २ ॥ पृथिवी समित्तामग्निः समिन्धे ॥ ३ ॥ सूर्य व्रतपते सम्राळसि व्रतपा असि व्रतभृदसि व्रतपतिरसि व्रतमचारिषं तदशकं तत्ते प्रब्रूमस्तन्नो गोपाय । वायो व्र० अग्ने व्रत० ॥ आयुर्दा० । ऋतुतिथ्यादितन्त्रसमाप्तिः । इत्यपवर्गे प्रवर्ग्यव्रतम् ॥ १६ ॥

अथारुणव्रतम् ॥ आदौ पूर्वेद्युकर्म । अग्निं परिस-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मूह्य पर्युक्ष्य । नमो वाचे । उदयन्तं । उष्णीषं त्रिरावर्तं वेष्टयित्वा ॥ आयुर्दा । परिषिच्य । त्रिभूरासि-एतेनैव धर्मेन साध्वधीते "इत्यन्तं ।" नमो वाचे । उष्णीषं निवार्य । इयं कन्या० । आयुर्दा । विमुच्य इति पूर्वेद्युकर्म ॥ ४ ॥ परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च । उत्तरतः संस्तीर्य । स्रुचं पूरयित्वा ॥ [ संवत्सरमेतद्व्रतं द्वौ मासौ यावद्ग्रहणं वा नियमः समासेन । तस्मिन्नियमविशेषाः । चतुर्थकालपानभक्षोऽऽ-सञ्चयवानहरहर्वाभक्ष्यमश्नीयात् ॥ अ० वा० सू० अ० प्र० सं० ऋ० अ० छ० अरुणव्रताय जुष्टं निर्वपामीति व्रतहोमः । प्रवर्ग्यवदादेशोऽरुणाः काण्वर्षयोऽरण्येऽधीयेताऽपमापमिति जपित्वा महानाम्नीरित्युदकं संस्पृश्य तदाचार्यः शिष्याय दद्यात्, शिवानः शन्तमा इत्योषधीरालभेत सुमृळीकेति भूमिमेवमपवर्ग्ये गौर्वासः कंसो हिरण्यं च दक्षिणान्यद्वा शुक्लं यथाशक्तिर्वा । यथाशक्ति कर्मेति ह विज्ञायते । एवं स्वाध्यायधर्मेणाधी-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यीत तपस्वी पुण्यो भवति ॥ ] आपमापमपः सर्वा अस्मादस्मादितोमुतः । अग्निर्वायुश्च सूर्यश्च सह सञ्चिस्करुर्धिया । वाय्वश्वा रश्मिपतयो मरीच्यात्मानो अद्रुहः । देवीर्भुवनसूवरीः पुत्रवत्त्वायिमे सुवः । महानाम्नी महामाना महामाया महासोमा महस्परि । देवीः पर्जन्यसूवरीः पुत्रवत्त्वायिमं सुवः । अपाश्नुष्टिमपारच-मपाश्नुष्टिमपारसम् । अपावमनुजावर्ति मम देवीर्ऋतेहिताः । वज्रन्देवीरनुदिताः स्थ वरुणं देवसूवरीः । आदित्यानुदितं देवीर्योनिनोर्ध्वमुदीषत ॥ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षिभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ केतवोऽरुणासश्चर्षणयो वातरशनाः प्रतिष्ठां शतधायसमाहिताः । अथो सहस्रधायसं शिवा नः शन्तमा भवथ दिव्या आप ओषधयो वनस्पतयः सुमृडीका

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सरस्वति मा ते व्योम सन्दृशे ॥ (इत्यारुण्येपूर्वोत्तरे शान्ती।) सावित्राणि । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये संवत्सराय ऋतुभ्यः अरुणेभ्यःकाण्वर्षिभ्यः छन्दोभ्यः अरुणाव्रताय जुष्टं निर्वपामि ॥ आपमापं । विष्णुर्मनसीति । आपमापं । सावित्राणि । अ० वा० सू० ब्र० प्र० सं० ऋ० अ० छ० अरुणाव्रताय जुष्टं प्रोक्षामि ॥ आपमापं । पात्राणि च तूष्णीं । आज्य-भागान्ते । रेवतीस्त्वा इत्यादि वसनादीननुमन्त्रयेत् ॥ नमो वाचे । पृथिवी समित्तामग्निः समिन्धे तामहं स-मिन्धे सा मा समिद्धा सुषमिद्धा तेजसा वर्चसा य-शसा ब्रह्मवर्चसेन समिन्ध्यात् । अन्तरिक्षं समित्तां वायुः । द्यौः समित्तां सूर्यः । पाणी प्रक्षाल्य । अग्ने व्रतपते सम्राळसि व्रतपा असि व्रतभृदसि व्रतपतिरसि व्रतमालभे तत्ते प्रब्रवीमि तच्छकेयं तेनर्ध्यासम् । वा-यो व्र० । सूर्य व्र० ॥ उदुत्यमिति दर्शनं० ॥ आयुर्दा । आपमापं ॥ "उक्तं स्थालीपाकस्य व्रतहोमः ।"

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अ० वा० सू० प्र० सं० ऋ० अ० छ० अरुण० ॥ "पश्चादग्नेर्दर्भेषु । अधीहि भोः सावित्रीत्रिजपपूर्वानरुणव्रतमन्त्रान्मे भवाननुब्रवीतु ॥" ओंभूर्भुवः स्वस्तत्सवितु ३ । "अरुणोरुणानामनुवाकं वाचयित्वा ॥" अरुणोरुणानां केतूनाम् ॥ योसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति मा मे प्रजाया मा पशूनां मा मम प्राणानादायोद्गाः । असौ योस्तमेति स सर्वेषां भूतानां प्राणानादायास्तमेति मा मे प्रजाया मा पशूनां मा मम प्राणानादायास्तङ्गाः । असौ य आपूर्यते स सर्वेषां भूतानां प्राणैरापूर्यते मा मे प्रजाया मा पशूनां मा मम प्राणैरापूरिष्ठाः । असौ य उपक्षीयते स सर्वेषां भूतानां प्राणैरुपक्षीयते मा मे प्रजाया मा पशूनां मा मम प्राणैरुपक्षेष्ठाः । अमूनि यानि नक्षत्राणि भूतानि चोपसर्पन्ति चोत्सर्पन्ति च तानि सर्वेषां भूतानां प्राणैरुपसर्पन्ति चोत्सर्पन्ति च मा मे प्रजाया मा पशूनां मा मम प्राणैरुपसर्पत चोत्स-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

र्पत ॥ अयं संवत्सरः स सर्वेषां भूतानां प्राणैरुपप्रसर्पति चोत्सर्पति च मा मे प्रजाया मा पशूनां मा मम प्राणैरुपसर्प चोत्सृप ॥ इमे ऋतवस्ते सर्वेषां भूतानां प्राणैरुपप्रसर्पन्ति चोत्सर्पन्ति च मा मे प्रजाया मा पशूनां मा मम प्राणैरुपसृपत मोत्सृपत ॥ इमे मासाश्चार्धमासास्ते सर्वेषां भूतानां प्राणैरुपप्रसर्पन्ति चोत्सर्पन्ति च मा मे प्रजाया मा पशूनां मा मम प्राणैरुपसृपत मोत्सृपत ॥ इदमहस्तत्सर्वेषां भूतानां प्राणैरुपसर्पति चोत्सर्पति च मा मे प्रजाया मा पशूनां मा मम प्राणैरुपसृप मोत्सृप ॥ इयं रात्रिः सा सर्वेषां भूतानां प्राणैरुपप्रसर्पति चोत्सर्पति च मा मे प्रजाया मा पशूनां मा मम प्राणैरुपसृप मोत्सृप ॥ यद्वेदव्रतं तदत्रव्रतं० । नमो ब्रह्मणे "इत्यन्तं ।" आपमार्पं । ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ इत्यरुणाव्रतम् १७

॥ अथापवर्गेऽरुणाव्रतम् ॥ आदौ पूर्वेद्युकर्म । परिसमूह्य पर्युक्ष्य । नमो वाचे । उदयन्तं । उष्णीषं

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

त्रिरावर्तं वेष्टयित्वा ॥ आयुर्दा । परिषिच्य । त्रिभूरसि० । एतेनैव धर्मेण साध्वधीते "इत्यन्तं ।" नमो वाचे । उष्णीषं निवार्य । इयं कन्या० । आयुर्दा । विमुच्य । इति पूर्वेद्युकर्म ॥ ५ ॥ अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य । उत्तरतः संस्तीर्य । आपमापं । सावित्राणि । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये संवत्सराय ऋतुभ्यः अरुणेभ्यःकाण्डर्षिभ्यः छन्दोभ्यः अपवर्ग्ये अरुणव्रताय जुष्टं निर्वपामि ॥ आपमापं । विष्णुर्मनसीति । आपमापं । सावित्राणि । अ० वा० सू० ब्र० प्र० सं० ऋ० अ० छ० अपवर्ग्येरुणव्रताय जुष्टं प्रोक्षामि । आपमापं० । पात्राणि च तूष्णीं । आज्यभागान्ते । रेवतीस्त्वा । नमो वाचे । मा नो घर्मो इत्येकोनत्रिंशद्भिरुत्तमेन प्रतीका० । आयुर्दा । आपमापं । उक्तं स्थालीपाकस्य व्रतहोमः ॥ अ० वा० सू० ब्र० प्र० सं० ऋ० अ० छ० अपवर्ग्येऽरुणव्रताय ॥ आपमापं । नमो वाचे । द्यौः समि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

त्वां सूर्यः । सूर्य व्रतपते सम्राळसि । आयुर्दा । ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ इत्यपवर्ग्येऽरुणव्रतम् १८

॥ अथौपनिषदव्रतम् ॥ आदौ पूर्वेद्युकर्म । परिसमूह्य पर्युक्ष्य । नमो वाचे । उदयन्तं । उष्णीषं त्रिरावर्तं वेष्टयित्वा । आयुर्दा । परिषिच्य । त्रिभूरसि । नमो वाचे । उष्णीषं निवार्य । इयं कन्या । आयुर्दा । विमुच्य । इति पूर्वेद्युकर्म ॥ ६ ॥ परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च । उत्तरतः० दैवतं निर्वपति ॥ "सुमन्तोः कश्यपस्य तदन्तेवासिनां चार्षम्" शन्नो मित्रः शं वरुणः शन्नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पतिः शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे नमो वायवे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारं शान्तिः शान्तिः शान्तिः । सह ना अवतु सह नौ भुनक्तु सह वीर्यं करवावहै तेजस्वि ना अधीतमस्तु

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मा विद्विषावहै शान्तिः शान्तिः शान्तिः ॥ सावित्राणि । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये छन्दोभ्यः ऋषिभ्यः छन्दोभ्यः औपनिषद्व्रताय जुष्टं निर्वपामि ॥ शन्नो मित्रः शं वरुणः शन्नो अस्त्वर्यमा, शन्न इन्द्रश्चाग्निश्च शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे नमो वायवे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्मावादिषमृतमवादिषं सत्यमवादिषं तन्मामावीत्तद्वक्तारमावीदावीन्मामावीद्वक्तारं शान्तिः ३ । सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै तेजस्वि नावधीतमस्तु मा विद्विषावहै शान्तिः ३ ॥ (इत्यौपनिषद्युत्तरा शान्तिः ॥) विष्णुर्मनसीति । शन्नो मित्रः शं वरुणः शन्नो भवत्वर्यमा । सावित्राणि । अ० वा० सू० ब्र० प्र० छ० ऋ० छ० औपनिषद्व्रताय जुष्टं प्रोक्षामि ॥ शन्नो मित्रः शं वरुणः शन्न अस्त्वर्यमा । पात्राणि च तूष्णीं । आज्यभागान्ते । [illegible] । नमो वाचे । पृथिवी [illegible] । अग्ने

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

व्रतपते । उदुत्यमिति दर्शर्चेन । आयुर्दा । शन्नो मि-
त्रः भवत्वर्यमा । उक्तं स्थालीपाकस्य व्रतहोमः । अ०
वा० सू० व्र० छ० ऋ० छ० औपनिषदव्रताय ॥
"पश्चादग्नेर्दर्भेषु । अधीहि भोः सावित्रीत्रिजपपूर्वानौप-
निषदव्रतमन्त्रान्मे भवाननुब्रवीतु ॥" ओंभूर्भुवःस्वस्त
त्सवि० ३ । यच्छन्दसामिति द्वे वाचयति ॥ यच्छ-
न्दसामृषभो विश्वरूपः छन्दोभ्योध्यमृतात्सम्बभूव ।
स मामिन्द्रो मेधयास्पृणोत्व मृतस्य देव धारणो भू-
यासम् ॥ १ ॥ शरीरं मे विचक्षणं वाङ्मे मधु म-
द्दुहे । कर्णाभ्यां भूरिसुश्रवं ब्रह्मणः कोशोसि मेधया-
पिहितः श्रुतं मे गोपाय ॥ यद्वेदव्रतं तदत्रव्रतं० ॥
प्रवर्ग्येणौपनिषदं व्याख्यातं । तस्मिन्नियमविशेषाः ।
[न दक्षिणेऽनाध्यायो नात्र नक्तमभोजनं न मृन्मये
भोजनप्रतिषेधः नैनमेकोधीयीथाः मा बहवोधीयध्वं द्वे-
एवाधीयीथाः प्रथमद्वादशौ शान्तिर्द्वादशानां त्रयोदश
चतुर्दशयोः प्रथमं यजुःशान्तिः । एवमन्ते ।] शन्नो

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मित्रः शन्नो अस्त्वर्यमा ॥ ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ इत्यौपनिषदव्रतम् ॥ १९ ॥

अथ श्रीकामः ॥ अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पश्च । श्रियै श्रीकामदेवताभ्यो जुष्टं निर्वपामि । एवं प्रोक्षामि । आज्यभागान्ते । [श्रीकामः श्वेताया गोः सरूपवत्सायाः पुंवत्सायाः पयसि स्थालीपाकं श्रपयित्वा । आवहन्तीति द्वाभ्यां स्थालीपाकस्य जुहुयात ।] आवहन्ती वितन्वाना कुर्वाणा चरमात्मनः । वासांसि मम गावश्चाऽन्नपानेन वर्धय स्वाहा ॥ १ ॥ सुवर्णां हरिणीं लक्ष्मीं धनदामश्वपूजिताम् । ततो मे श्रियमावह लोमशां पशुभिः सह स्वाहा ॥ २ ॥ श्रीरेनमनपगा भवतु । ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ [अन्येनान्नाद्येन च ब्राह्मणान्भोजयित्वा हुतशेषस्य स्वयं प्राश्नीयात् ॥] इति श्रीकामः ॥ २० ॥

अथ यशस्कामः ॥ अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पश्च । यशसे यशस्कामदेवताभ्यो जुष्टं

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

निर्वपामि । एवं प्रोक्षामि ॥ आज्यभागान्ते । [यशस्कामो रोहिण्या गोः सरूपवत्सायाः पुंवत्सायाः पयसि स्थालीपाकं श्रपयित्वा ॥ आ मा यन्त्वित्यष्टाभिः स्थालीपाकस्य जुहुयात् ।] आ मा यन्तु ब्रह्मचारिणः स्वाहा । सं मा यन्तु ब्रह्मचारिणः । तपो यशो यशानि । जनो यशो यशानि । श्रेयान्वसो यशो यशानि । तं त्वा भग प्रविशामि । स मा भग प्रविश । अस्मिन्सहस्रशाखे विभजाहं त्वयि मृजे स्वाहा ॥ ८ ॥ यथापः प्रवणायन्ति यथा मासा अहर्जनम् । एवं मा ब्रह्मचारिणो धातुरायन्तु सर्वशः । प्रतिवेशोसि प्र प्र मा भाहि प्र मा पद्यस्व, नमो ब्रह्मणे ३ धारणं मेस्त्वऽनिराकरणं धारयितास्मि कर्णयोःश्रुतं मे मा पच्योष्ट माऽमुष्य मेधाव्यऽनिराकरिष्णुर्भवति । अन्येनान्नेन च ब्राह्मणान्भोजयित्वा हुतशेषस्य स्वयं प्राश्नीयात् ॥ असौ अमुकदत्तः यशस्वी भवतु । [श्रीकामयशस्कामयोराज्यभागान्ते स्थालीपाकहोमः ।] अ-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तुतिथ्यादितन्त्रसमाप्तिः ॥ (नानयोः पूर्वेद्युकर्म, न वसनानुमन्त्रणादि, नात्र व्रतादेशः, न व्रतमन्त्रवाचनम्, नापवर्गः ।) इति यशस्कामः ॥ २१ ॥

अथापवर्गे औपनिषदव्रतम् ॥ आदौ पूर्वेद्युकर्म । परिसमूह्य पर्युक्ष्य । नमो वाचे । उदयन्तं । उष्णीषं त्रिरावर्तं वेष्टयित्वा । आयुर्दा । अग्निं परिषिच्य । विभूरसि । नमो वाचे । उष्णीषं निवार्य । इयं कन्या । आयुर्दा । विमुच्य । इति पूर्वेद्युकर्म ॥ ७ ॥ परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पक्ष । उत्तरतः संस्तीर्य । शन्नो भवत्वर्यमा । सावित्राणि । अग्नये वायवे सूर्याय ब्रह्मणे प्रजापतये छन्दोभ्यः ऋषिभ्यः छन्दोभ्यः अपवर्गे औपनिषदव्रताय जुष्टं निर्वपामि ॥ शन्नो अस्त्वर्यमा । विष्णुर्मनसीति । शन्नो भवत्वर्यमा सावित्राणि । अ० वा० सू० ब्र० प्र० छ० ऋ० छ० अपवर्गे औपनिषदव्रताय जुष्टं प्रोक्षामि । शन्नो भवत्वर्यमा । आज्यभागान्ते । रेवतीस्त्वा । नमो वा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

चे । मा नो घर्मो इत्येकोन । आयुर्दा । शन्नो भव-त्वर्यमा । उक्तं स्थालीपाकस्य व्रतहोमः ॥ अ० वा० सू० ब्र० प्र० छ० ऋ० छ० अपवर्गे औपनि० ॥ शन्नो अस्त्वर्यमा । नमो वाचे । द्यौः समित्तां सूर्यः । सूर्य व्रतपते ॥ "सर्वे बान्धवाः पाणौ पुष्पं गृहीत्वा, शुक्रियं रुद्रस्य । आयुर्दा, इति पठित्वाग्नौ प्रक्षिपेत् ॥" ऋतु-तिथ्यादितन्त्रसमाप्तिः ॥ इत्यपवर्गे औपनिषदव्रतम् २२

अथ गोदानम् ॥ परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च । न निर्वापः । गोदानदेवताभ्य इदमा-ज्यमर्पयामि नमः ॥ आज्यभागान्ते । (षोडशे वर्षे गोदानमग्नौ वा समाप्ते तद्व्याख्यातम्, जटाकर्मणा चूडाकरणवद्वाऽऽज्यभागान्ते ।) अयमगात्सविता क्षुरेण उष्णेन वायोदकेन एहि । आदित्या रुद्रा वसवः सचेतसः सोमस्य राज्ञोवपत प्रचेतसः "इत्युष्णा आपोऽभिमन्त्रयते ॥" उष्णाश्च शीताश्च समीत्य सर्वा मृहस्पतिः सविता सत्यधर्मास्तदनुमन्यतामिति उष्णाः

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

शीतजलेषु संमिलाप्य ॥ आर्द्रदानवस्थ जीवदानवस्थो-
न्दतीरिहैनमवतपन्दतु जीवसे दीर्घायुत्वाय वर्चसे ओ-
षधे त्रायस्वेति दर्भमन्तर्धाय ओषधे त्रायस्वैनं, स्व-
धिते मैनं हिंसी, रितिक्षुरेणाभिधाय ॥ येनावपत्स-
विता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन
ब्राह्मणो वपतेदमद्याऽऽयुष्माञ्जरदष्टिर्यथाऽसत् ॥ अयम-
सावमुकदत्तः दक्षिणकेशान्ते । आर्द्रदानव । येन धा-
ता बृहस्पतिरग्नेरिन्द्रस्य चायुषेऽवपत् । तेनास्यायुषेऽव-
पत्सुश्लोक्याय स्वस्तये अयमसावमुकदेवः पश्चिमकेशान्ते ॥
आर्द्रदानव । येन पूषा प्रजापतेरग्नेः सूर्यस्य चायुषेऽवपत् ।
तेनास्यायुषेऽवपत्सुश्लोक्याय स्वस्तये । अयमसावमुक-
शर्मा उत्तरकेशान्ते । आर्द्रदान । येन भूयांश्च रात्रीं
ज्योक्पश्या च सूर्यम् । तेनास्यायुषेऽवपत्सुश्लोक्याय
स्वस्तये । अयमसावमुकस्वामी पूर्वकेशान्ते ॥ इति
प्रदक्षिणं प्रतिदिशं प्रतिमंत्रं दर्भक्षुरकर्म यत्क्षुरेण वर्त-
यता सुपेशसा वप्तर्वपसि केशान् । शुन्धिशिरोमायु-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ष्यायुःप्रमोषीरिति लोहायसं क्षुरं केशवापाय प्रयच्छति ॥ मा ते केशाननुगात्तेज एतत्तथा धाता ददातु ते । तुभ्यमिन्द्रो बृहस्पतिः सविता वर्च आदधु "रिति प्रपततोऽनुमन्त्रयते ॥" सुहृत्परिगृह्य केशानुप्यमानान्हरितगोमये समवचिनोति । उप्त्वाय राज्ञो वरुणस्य केशान्सोमो धाता सविता विष्णुरग्निः । तेभ्यो निधानं बहुधानुविन्दन्नन्तरा द्यावापृथिवी अवस्युरिति प्रागुदीचीं ह्रियमाणमनुमन्त्रयते । अरिक्के पर्याश्लेषयत इति श्रुतिः शिरःप्रक्षाल्य ॥ सार्वाहिं देवः । ये के च ज्मेत्याज्यप्रधानम् । ऋतुतिथ्यादितन्त्रसमाप्तिः ॥ इति गोदानम् ॥ २३ ॥

अथापवर्गे त्रैविद्यकम् ॥ अग्निं परिसमूह्य पर्युक्ष्य परिषिच्य । आदौ पञ्च । न निर्वापः । पृश्न्याः पयोसि । छन्दोभ्यः अपवर्गे त्रैविद्यकाय इदमाज्यमर्पयामि नमः । आज्यभागान्ते । रेवतीस्त्वा । आज्यप्रधानं । ये के च ज्मा । छन्दोभ्यः स्वाहा ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अपवर्गे त्रैविद्यकाय स्वाहा ॥ "समिधादानम्" यद्दे-
वा देवहेळनं देवासाश्चकृम वयम् । अग्निर्मा० ॥ यदि
दिवा यदि नक्तमेनांसि चकृम वयम् । वायुर्मा० ॥
यदि जाग्रद्यदि स्वप्नमेनांसि चकृम वयम् । सूर्यो मा०
"उपस्थानम्" अग्ने व्रतपते व्रतमाचारिषं तदशकं
तत्ते प्रब्रूमस्तन्नो गोपाय ॥ वायो० । सूर्य० ॥ ऋ-
तुतिथ्यादि । सर्वेषां बान्धवानां नैवेद्यम् ॥ अमृते-
शमुद्रया अमृतीकृत्य । अमृतमस्तु अमृतायतां नैवेद्यं,
सावित्राणि सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्वि-
नोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । महागणपतये०,
प्रजापतये सीमन्तकरणदेवताभ्यः अग्नये इन्द्राय वि-
ष्णवे पुंसवनदेवताभ्यः जातकरणदेवताभ्यः काय प्र-
जापतये नामकरणदेवताभ्यः मित्राय सोमाय अन्नप-
तये चूडाकरणदेवताभ्यः मेधायै सरस्वत्यै छन्दोभ्यः
उपायनदेवताभ्यः छन्दोभ्यः त्रैविद्यकव्रतदेवताभ्यः उ-
पाकरणदेवताभ्यः छन्दोभ्यः चातर्होत्रकदेवताभ्यः प्र-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ह्मणे प्रजापतये घर्माय सम्राजे सूर्याय विभ्राजे देवेभ्योघर्मपेभ्यः पितृभ्योघर्मपेभ्यः छन्दोभ्यः प्रवर्ग्यव्रतदेवताभ्यः। ब्र० प्र० घ० सू० दे० पि० छ० अपवर्गे प्रवर्ग्यव्रतदेवताभ्यः अ० वा० सू० ब्र० प्र० सं० ऋतुभ्यः अरुणेभ्यः काण्डर्षिभ्यः छ० अरुणव्रतदेवताभ्यः। अ० वा० सू० ब्र० प्र० सं० ऋ० अ० छ० अपवर्गेऽरुणव्रतदेवताभ्यः। अ० वा० सू० ब्र० प्र० छ० ऋषिभ्यः छ० औपनिषदव्रताय श्रियै श्रीकामदेवताभ्यः यशसे यशस्कामदेवताभ्यः अ० वा० सू० ब्र० प्र० छ० ऋषिभ्यः छ० अपवर्गे औपनिषदव्रतदेवताभ्यः गोदानव्रतदेवताभ्यः। छ० अपवर्गे त्रैविद्यकव्रतदेवताभ्यः स्नातकव्रतदेवताभ्यः मौञ्जीबन्धनयागदेवताभ्यः भगवते वासुदेवाय० विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै० इन्द्राय वज्रहस्ताय० हेरुकादिभ्यो वटुकादिभ्यः॥ उत्पन्नममृतं दिव्यं प्राक्

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ह्यताम् ॥ मुक्ताविद्रुम० । अद्य तावत् । सुतस्य मौ-
ञ्जीबन्धननिमित्तं ओंनमो नैवेद्यं निवेदयामि नमः ॥
इळामग्ने० । ब्राह्मणपूजनम् ॥ गायत्र्यै नमः ओंभूर्भु-
वःस्वः ३ अद्य तावत् अग्नेर्यविष्टस्य सानुचरस्य अ-
ध्वर्योः ब्रह्मविष्णुमहेश्वरदेवतानां आत्मनो० सुतस्य
मौञ्जीबन्धननिमित्तं अग्नेर्यविष्टब्राह्मणपूजनमर्चामहं क-
रिष्ये ओंकुरुष्व ॥ यवान्विकीर्य । अग्नेर्यविष्टाय सानु-
चराय अध्वर्यवे ब्रह्मविष्णुमहेश्वरदेवताभ्यः समालभनं
गन्धादि दक्षिणान्तं । गायत्र्यै नमः ३ अद्य तावत् ।
अग्नेर्यविष्टस्य० आत्मनो० सुतस्य मौञ्जीबन्धननिमित्त-
मच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ यवोदकं नमः ॥
सर्वेषां बान्धवानां आश्रावितमिति पूर्णां दत्वा । वि-
मुच्य पुनरग्निं परिसमूह्य पर्युक्ष्य । अग्नौ दण्डं प्रासीत्
अप्सु मेखलां वासश्च ॥ विमुच्य इत्यपवर्गे त्रैविद्यकम् २४

अथ स्नानव्रतमन्त्राः ॥ छन्दस्यऽर्थान्बुद्ध्वा गां का-
रयेद्वार्मागर्द्दीत । यस्मिन् यथा सर्वाणि भवन्ति

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

आचार्य ऋत्विक् राजा विवाह्यः प्रियः स्नातक इत्यऽथैनमर्हयन्ति । आदौ च कर्मणोर्घ्यमुदकं सौषधं दर्भा इति कंसे चमसे वा दध्यासिच्य मधु च वर्षीयसा पिधाय विष्टराभ्यां परिगृह्य पाद्यप्रथमैः प्रतिपद्यन्ते ॥ मयि दोहोसि विराजो दोहः पद्यायै विराजो दोहमशीयेत्याह्रियमाणमनुमन्त्रयते ॥ "भगवन् विष्टरो विष्टरो विष्टरः" विष्णोः आचार्यस्य वा स्नातकस्य इदमासनमास्यतां । विष्टरोसि मातरि सीदेति विष्टरमास्तीर्य तस्मिन्नुपविशति । विष्टर आसीनायैकैकं त्रिः प्राह ॥ पाद्यं ३ अर्घ्यं ३ मधुपर्कं ३ आचमनीयं ३ नैव भोरित्याह, न मार्षेति ॥ शन्नो देवी०, लाजाश्च । भगवन्पाद्यं २ ओं भगवन्पाद्यं ददानि ते ३ । ओं भगवन् पाद्यं प्रतिगृह्णामि ३ । मयि दोहोऽसीति पाद्यपात्रं हस्ताभ्यां गृहीत्वा वामपाणौ निधाय स्वयं पादाववनेनिज्यात् । दक्षिणं पादमवनेनिज, इदमहमस्मिन्कुले ब्रह्मवर्चसं दधामि । उत्तरं पादमवनेनिज,

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

इदमहं मां मयि तेजो वीर्यमन्नाद्यं प्रजां पशून् ब्रह्म
वर्चसं दधामि ॥ शन्नो देवी० । आपः चीरं०
भगवन्नर्घ्यं दधानि ते ३, सावित्राणि० । ॐ भग
वन्नर्घ्यं प्रतिगृह्णामि ३ इति त्रिरुक्त्वा प्रतिग्रहीता पाद्य
पात्रवदाऽऽदाय । आपो हिष्ठेति तिसृभिः शिरासि पवि-
त्रेणापः चिपेत् ॥ पवित्रं निवार्य । विष्णवे आचा-
र्याय वा स्नातकाय गन्धादि यज्ञोपवीतान्तं । विष्णो-
रर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोस्तु । अन्नं नमः ।
सावित्राणीति मधुपर्कः ॥ "मधुपर्कं विदुस्त्र्यङ्गं या-
ज्ञिका यज्ञकर्मणि । माचिकं च घृतं चैव सुजातं शो-
भनं दधि ॥" भगवन्मधुपर्को मधुपर्कः ३ । ॐभग-
वन्मधुपर्कं दधानि ते ३ इति त्रिरुच्चार्य दाता । सा-
वित्राणि । भगवन्मधुपर्कं प्रतिगृह्णामि ३ इति त्रिरु-
च्चार्याञ्जलिनादाय सव्ये पाणौ निधाय ग्रहीता विष्टरो-
स्यन्तरिक्षमधि विश्रयस्वेति वर्षिष्टपात्रस्योपरिस्थितं वि
ष्टरमूर्ध्वमुत्क्षिपेत् । विष्टरमवकृष्य । उरुत्वेत्यवसार्य

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

च्चक्षुरित्यवेक्ष्य । पृथिव्यास्त्वा नाभौ साधयाम्यऽनेन
ति विष्टेरऽधः स्थिते भूमौ निधाय । मधुवात इति ति-
सृभिः प्रदेशिन्याऽलोडयति । वसवस्त्वाऽग्निराजानो भ-
क्षयन्तु, पितरस्त्वा यमरा०, रुद्रास्त्वा सोमरा०,
आदित्यास्त्वा वरुणरा०, विश्वे त्वा देवा बृहस्पति-
राजानो० ॥ इति प्रदक्षिणं प्रतिदिशं प्रतिमंत्रं पात्र-
स्यान्तेषु लेपान्निर्मार्ष्टि ॥ विश्वे देवा इत्युत्तरार्ध एव
यन्मधुन इति च । यन्मधुनो मधुव्यस्य परममन्नाद्यं
रूपं तेनाहं मधुनो मधव्यस्य परमस्यान्नाद्यस्य परमो-
न्नादो मधव्यो भूयासं त्रिय्यै विद्यायै यशोसि श्रियै
यशोसि यशसे ब्राह्मणो दीप्तिरसि इति । सत्यश्रीः,
यशःश्रीः, मयिश्रीः, श्रीः श्रियतामिति मधुपर्कस्य
चतुष्प्राश्नाति अङ्गुष्ठद्वितीयाभिः कनिष्ठया प्रथममेवम-
नुपूर्वं सर्वाभि स्तदवशिष्टं सुहृदे प्रयच्छति । भगव-
आचमनीयं ३ त्रिरित्युक्ते विष्णवे आचार्याय वा स्ना-
तकाय आचमनीयं नमः । अमृतोपस्तरणमसि स्वाहे-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

त्यप आचमयेत् । विष्णवे दक्षिणायै ॥ तस्मा असि-
पाणिर्गां प्राह । खड्गपाणिस्तां शास्ति । भगवन्गौः ३
गां प्रकरिष्ये ३ इति मा प्रमार्षीः ३ तां शास्ति ।
मम चामुष्याश्च पाप्मानं जहि, हतो मे पाप्मानं
मे हतं कुरुतेति चतुरो नानागोत्रान्ब्राह्मणान्भोजयेत् ।
एष आद्योपायो, यद्युत्सृजेत्तदा, माता रुद्राणामिति
जपेत् । माता रुद्राणां दुहिता वसूनां स्वसाऽऽदित्या-
नाममृतस्य नाभिः । प्रणुवोचं चिकितुषे जनाय मा
गामनागामदितिं वधिष्ठ ॥ सूयवसाद्भगवती हि भू-
यादथो वयं भगवतः स्याम । अद्धि तृणमघ्न्ये वि-
श्वधानीं पिब शुद्धमुदकमाचरन्ती । ओं ३ उत्सृजतु
तृणाण्यत्त्वित्युक्त्वा तामुत्सृष्टां पशुमाङ्ग्वा न मांसो मधुप-
र्कः स्यादिति ह ज्ञायतेऽपिवा घृतौदन एव वा स्या-
त् ॥ मधुपर्के च यज्ञे च पितृदैवतकर्मणि । अत्रैव
पशवो हिंस्रा नान्यत्र मनुरब्रवीत् ॥ इति मधुपर्कवि-
धिः ॥ "एवं मधुपर्कं शिष्यो निवर्त्य ।" श्रोत्रि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

योऽन्यो वेदाध्यायी, न तस्य स्नानम्, अथास्य स्नानं व्रजपरिहितं प्रपाद्य जटाश्मश्रुलोमनखमभिसंहार्य, "आपो हिष्ठा" इति तिसृभिः स्नायात् । हिरण्यवर्णाः इति च द्वाभ्याम् । हिरण्यवर्णाः शुचयः ।१। हिरण्यवर्णाः शुचयः पावका विचक्रमुर्हित्वावद्यमापः । शतं पवित्रा विततान्ह्यासां भाभिर्मा देवः सविता पुनातु ॥ २ ॥ शन्न आपो धन्वन्याः०, ॥ ३ ॥ आपो अस्मान्मातर० ॥ ४ ॥ इति च । द्यौस्ते इति छत्रं धारयेत् । द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षं समुद्रो योनिः । विख्याय चक्षुषा त्वामभितिष्ठा प्रतन्यतः । इममग्न इति हिरण्यं बध्नीयात् ॥ गृत्समदस्य भार्गवस्य । इममग्नमायुषे० ॥ प्रतिष्ठे इति वाराह्या उपानहौ प्रतिमुञ्चेत् । प्रतिष्ठे स्थो देवते मा मा हिंसिष्टम् ॥ द्विवस्त्रोऽत ऊर्ध्वम् । तस्माच्छोभनं वासो भतव्यमिति श्रुतिः । ततो ब्रह्मचारी बाढमिति प्रत्याह ॥ वैणवदण्डधारी स्याः, नित्यं छत्रधारी स्याः, अपन्थदा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यी स्याः, अदत्तहरणं प्रतिषिद्धम्, अपरया द्वारा निःसरणं प्रतिषिद्धम्, मलवद्वाससा सह संभाषा प्रतिषिद्धा, रजोवाससा सह शय्या प्र०, गुरोर्दुरुक्तवचनं प्रतिषिद्धम्, अस्थाने स्मयनं प्र० सरणं प्र० गायनं प्र० नर्तनं प्र० तस्य चेक्षणं प्रति०, ॥ वेदमनूच्यैकादशोनुवाकेनानुशास्ति । सत्यं वद, धर्मं चर, स्वाध्यायान्मा प्रमद, आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः, सत्यान्न प्रमदितव्यम्, धर्मान्न प्र०, यत्नान्न प्र०, कुशलान्न प्र०, स्वाध्यायप्रवचनाभ्यां न प्र०, यज्ञदेवपितृकार्येभ्यो न प्र०, मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव, अतिथिदेवो भव, यान्यनवद्यानि कर्माणि तानि त्वया कर्तव्यानि नो इतराणि । अथ यान्यस्माकं सुचरितानि तानि त्वया कर्तव्यानि नो इतराणि । अथ ये केचास्मच्छ्रेयांसो ब्राह्मणा आगच्छेरंस्तेषां त्वयाऽऽसनेन प्रश्रयितव्यम्, श्रद्धया देयमश्रद्धया देयं संविदा देयमसंविदा देयं श्रि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

या दयं भिया देयं वित्त्यै देयमवित्त्यै देयं भूत्यै देयमभूत्यै देयम् ॥ अथ यदि ते कर्मविचिकित्सा वृत्तिविचिकित्सा वा स्यात् ये तत्र ब्राह्मणाः सन्दर्शिनो युक्ता अयुक्ता रूक्षा अरूक्षा लुब्धा अलुब्धा वा धर्मकामा स्युः, यथा ते तत्र वर्तेरंस्तथा त्वं तत्र वर्तेथाः, एष आदेशः, एष उपदेशः , एषा वेदोपनिषदेतदनुशासनमेवमेवैतदुपास्यम् ॥ अथातोष्टाचत्वारिंशत्समितम् । तत्र विधिविशेषः । नियमेष्वचार्यप्रधानः स्यात् । निलयार्थी यूनवृद्धं न प्रविशेत् । अनिलयः स्यात् । अन्यत्र वृक्षाद्वल्मीकाद्वा । निस्तान्तवामित्येके । यथोक्तमेकं तु वासः शाणी चीरं कुतपं वा । परिमितमुरःप्रमाणमुपरि जानु । चतुर्थकालपानभक्तः । असञ्चयवान् । अहरहर्वाभैक्षमश्नीयात् । अहस्तिष्ठेत् । रात्रावासीत उभयं मुनिव्रतः स्यात् । स्त्रीशूद्रपतितरभसरजस्वलैर्वा न सम्भाषेतेतिच्यवनोभृगुः । द्वादशरात्रं वोभयतः । अमावस्यां पौर्णमासीं च पालाश्यः समिधो नित्याः ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

परिधिष्वृक्षाणां वा ॥ १६ ॥ मेधां मह्यमिति पाणि-मार्गं दत्वा त्रिषवणमहोरात्रमुदकोपस्पर्शनम् । नमो ह्माय मोह्मायेति चानुसवनम् । अक्षये वैश्वानराय तपाय तापसाय तपन्ताय विन्दवे विन्दाय सुविन्दाय सर्वविन्दाय नमः पराय सुपाराय पारयन्ताय शान्ताय नम ऊर्म्याय नमः क्षुम्याय नमश्च्यवनाय भार्गवाय इत्येता एव देवतास्तर्पयन्नुदकेन एष संवत्सरं चरित्वा विमलो विपापो भवति सर्वेषां वेदानां चरितब्रह्मचर्यो यदि नान्यत्कुरुते । स तु खलु चरितब्रह्मचर्यो दशदश पुरुषान्पुनाति पूर्वापरानात्मानं चैकविंशम् पंक्तिं च या-वत्पश्यति यस्यामुपविशति । समाप्त एतासामेव देव-तानामन्नस्य जुहोति धेनुर्दक्षिणा ॥ इति शिक्षा ॥ पुनस्तीर्थं गच्छेत् प्राचीमुदीचीं वा तत्र मंत्रः ॥ ये ते पन्थानः सविता पूर्व्या सोरेणा वो वितता अन्त-रिक्षे तेभिर्नो अद्य पथिभिः सुगेभी रक्षा चनो अधि च देव ब्रूहि ॥ नमोग्नये पृथिवीक्षिते लोकस्पृते लोक-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मस्मै यजमानाय देहि, नमो वायवेऽन्तरिक्षक्षिते लो-
कस्पृते लोकमस्मै यजमानाय देहि, नम आदित्याय
दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि ॥
नदीतीरं गत्वा सन्ध्योपासनं कुर्यात् ॥ ततो नदीतीरादाग-
त्य । स्वस्तिपुण्यत्वाद्धोमस्य चाम्रातत्वात्त्रिकादिभिर्होमः ।
तत्रायं विधिः । परिसमूह्य पर्युक्ष्य परिषिच्य । पुरस्तात्
आज्यदर्शनं । अभ्युक्ष्य पवित्रमग्नौ यैःकैश्चिद्दर्भाग्रैः स्रु-
वं संसृज्य "तव श्रिय इति चतुर्विंशतिभिराज्याहुतीः
स्रुवेण जुहुयात् ॥" तव श्रिये व्याजिहीत ॥ १ ॥
बृहस्पति अति यदर्यो ॥ २ ॥ बृहस्पतिसमजयद्वसू
॥ ३ ॥ यमो दाधार ॥ ४ ॥ यथा पश्च ॥ ५ ॥
त्रिकद्रुकेभिः ॥ ६ ॥ मृळा नो रुद्रो तन्नो ॥ ७ ॥
अश्यामते सुमति ॥ ८ ॥ त्वेषं वयं रुद्रं ॥ ९ ॥
अव ते हेळो ॥ १० ॥ उदुत्तमं वरुण ॥ १२ ॥
इमं मे वरुण ॥ १२ ॥ ओंभूर्लो ॥ १३ ॥ ओंभु-
र्वोलो ॥ १४ ॥ ओंस्व ॥ १५ ॥ ओंभूर्भु ॥ १६ ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अग्निर्मूर्धा ॥ १७ ॥ उभा वामिन्द्राग्नी ॥ १८ ॥
अयमिह ॥ १९ ॥ अयं ते योनि ॥ २० ॥ स्तमो
देवानां । उपप्रयन्तो ॥ २१ ॥ अस्य प्रत्ना ॥ २२ ॥
अरुणोः । कदा चनस्तरी ॥ २३ ॥ अक्षोटसहितं ।
परि ते दूळभो ॥ २४ ॥ विमुच्य । नयामि । इति
त्रिकाहोमाः ॥ ब्रह्मचर्यात्समावृत्तं पिता पुत्रं मधुपर्के-
णार्हयेत् । यदुक्तं । तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं
पितुः । स्रग्विणं तल्प आसीनमर्हयेत्प्रथमं पिता ॥
मधुपर्कं स्नातकाय दत्वा । अथ यजमानहस्तेन वैश्वदे
वं कुर्यात् । अग्नेः पृच्छां विसर्ज्य । अग्नये स्विष्टकृते
स्वाहा । विमुच्य । नयामि ॥ क्षेत्रेशबलिः । गाय-
त्र्यै नमः ३ । महागणपतेः कलशपूजनं ग्रहमण्डल-
पूजनं सूर्यपू० सोमपू० ऋषिपू० चतुर्मुखब्रह्मपू० क्षेत्रे-
श्वरपूजनमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ यवोदकं नमः ।
अज्ञा मे दीयतां । आपन्नोस्मि । ईशानविष्णु । कलिक-
लुष । ब्रह्मविसर्जनं कृत्वा विप्रश्चति मत्वा विप्रश्चत विष्णु-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

स्त्वा विमुञ्चत्वऽस्य यज्ञस्य वै मह्यं सन्तुत्यै अध्यय-
नाय कामायायुषे त्वा प्राणाय त्वा व्यानाय त्वापा-
नाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा पोषाय त्वा-
घोषाय त्वा राट्घोषाय त्वा प्रतिष्ठ्यै त्वेति ब्रह्मवि-
सर्जनं ॥ कक्षीवन्तं य औषज० इति ऋषि विसर्जनम् ॥
क्षमध्वं मम क्षेत्रेशाः । नमो ब्रह्मणे । उदकलशमा-
नीय । मन्त्रार्थाः । इति उपनयनविधिः ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

॥ ओ ३ म् ॥

अथ

# कन्यासंस्कारविधिः

अथ कन्यासंस्कारसामग्री ॥ शकुनं अश्मचूर्णं जलं अक्षतं अक्षोट घृतं यवः अग्निहोत्री इन्धनं पेर वध्वाः वरस्य च काष्टपादू (खाव) पुष्पाणि छयेट दधि क्षीरं भाण्डानि वरि अपूपिका भक्तवरि हाभील श्रय १२ पशु हन्द कुङ्ग कर्पूर कस्तूरि । इति सामग्री ॥

अश्मचूर्णेन ग्रहमण्डमुल्लिख्य । वषट्ते विष्ण तावत् प्रधानानि । [अक्षोटदेवताः] ब्रह्मा देवानां० । ब्रा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

क्ष्म्यै नमः माहेश्वर्यै कौमार्यै वैष्णव्यै वाराह्यै नारसिंह्यै ऐन्द्र्यै । [घृतधारादे०] गौरीर्मिमाय० । गौर्यै पद्मायै शच्यै मेधायै सावित्र्यै विजयायै जयायै । [टिकपूचदे०] दिव्यं सुपर्णं० । देवसेनायै स्वाहायै सुधायै मातृभ्यः लोकमातृभ्यः धृत्यै तुष्ट्यै [स्वात्मदे०] जातवेदसे० । पुष्ट्यै आत्मदेवतायै । [कुड्यशाखादे०] ये के च ज्मा० । ललितायै उमायै गौर्यै अम्बिकायै सलिलाश्रयायै भगाह्यै भगान्यै । [भक्तपिण्डदे०] राकामहं० । अनुमत्यै राकायै सिनीवाल्यै कुह्वै धात्र्यै सर्वेश्वर्यै अन्नेश्वर्यै । [देवतवारिदे०] यो विश्वचक्षु० । एकान्तवासिन्यै क्षेत्रेशदे० क्षेत्रस्य पतिना० गणानां त्वा० दुर्गाक्षेत्रगणेश्वरदेवताभ्यो नमः मातृकामण्डलदेवताभ्यः ॥ [जातकर्मविषये] "जातकरणदेवताभ्यः । काय प्रजापतये नामकरणदेवताभ्यः ॥" (कन्यासंस्कारविषये) ये के च ज्मा० सीमन्तकरणदेवताभ्यः । इन्द्राणीमासु नारीषु० । नाहमिन्द्राणी रारण सख्युर्वृ-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

षाकपेन्नृते यस्ये० सद्योद्धरणदेवताभ्यः । इन्द्राय इन्द्राण्यै कामायै भगायै ह्रियै श्रियै लक्ष्म्यै तुष्ट्यै पुष्ट्यै विश्वावसवे गन्धर्वराजाय गोदानदेवताभ्यः ॥ अलक्ष्मीनिर्णोदनदेवताभ्यः ॥ [द्वादशवर्षादाधिक्यां कन्यायां रजोदोषनिवारणार्थं हविष्कल्पं नान्यथा ।] "अर्यम्णे प्रजापतये हविष्कल्पदेवताभ्यः ॥" इन्द्राण्यै वरुणान्यै गन्धर्वाण्यै उदकान्यै अग्नये जीवपुत्राय प्रजापतये महाराजाय स्कन्दाय अर्यम्णे भगाय प्रजानकाय हविष्पुण्यदेवताभ्यः ॥ अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वाष्ट्रे राज्ञे प्रजापतये कन्याहोमदेवताभ्यः ॥ अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वाष्ट्रे राज्ञे प्रजापतये कुम्भाय वैश्रवणाय ईशानाय वरहोमदेवताभ्यः ॥ अग्निर्ना रयिमश्नवत्० । प्रजापते नहि० महाप्रस्थानदेवताभ्यः । कन्यासंस्कारदेवताभ्यः ॥ तद्विष्णोः० वासुदेवादिभ्यो विष्णुपश्चा-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यतनदेवताभ्यः । इन्द्रापर्वता । ऐन्द्राग्नं तावत् । सा- वित्राणि मधुपर्कं । हिरण्यगर्भः ८ अर्चन्तस्त्वा ॥ (यजमानमानीय ।) आसनशोधनं । अ नाभौ । तीर्थे स्नेयं० । वसो पवित्रं । आशीर्वादं । कंकणबन्धनं । परमात्मने । स्वप्रकाशो । वनस्पति । नमो धर्म । यत्रास्ति माता० । अद्य तावत् महागणपतये० पितृ गणदेवताभ्यः । ब्राह्म्यै माहेश्वर्यै कुमार्यै वैष्णव्यै वा- राह्यै नारसिंह्यै ऐन्द्र्यै गौर्यै पद्मायै शच्यै मेधायै सा- वित्र्यै विजयायै जयायै देवसेनायै स्वाहायै सुधायै मा- तृभ्यः लोकमातृभ्यः धृत्यै तुष्ट्यै पुष्ट्यै आत्मदेवतायै ललितायै उमायै गौर्यै अम्बिकायै सलिलाश्रयायै भ- गाह्यै भगाच्यै अनुमत्यै सकायै सिनीवाल्यै कुह्वै धा- त्र्यै सर्वेश्वर्यै अन्नेश्वर्यै एकान्तवासिन्यै दुर्गाक्षेत्रगणेश्वर- देवताभ्यः मातृमण्डलदेवताभ्यः ॥ सीमन्तकरणदेव- ताभ्यः सद्योद्धरणदेवताभ्यः इन्द्राय इन्द्राण्यै कामाय भगाय ह्रियै श्रियै लक्ष्म्यै तुष्ट्यै पुष्ट्यै विश्वावसवे

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

गन्धर्वराजाय गोदानदेवताभ्यः अलक्ष्मीनिर्णोदनदेवताभ्यः [रजोदोषार्थे] अर्यम्णे प्रजापतये हविकल्पदेवताभ्यः इन्द्राण्यै वरुणान्यै गन्धर्वाण्यै उदकान्यै अग्नये जीवपुत्राय प्रजापतये महाराजाय स्कन्दाय अर्यम्णे भगाय प्रजानकाय हविष्पुण्यदेवताभ्यः अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वाष्ट्रे राज्ञे प्रजापतये अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णे पूष्णे त्वाष्ट्रे राज्ञे प्रजापतये कुम्भाय वैश्रवनाय ईशानाय वरहोमदेवताभ्यः अग्नये पुष्टिपतये प्रजापतये महाप्रस्थानदेवताभ्यः कन्यासंस्कारदेवताभ्यः वासुदेवाय० विष्णुपश्चायतनदेवताभ्यः इन्द्राय वज्रहस्ताय० हेरुकादिभ्यो वटुकादिभ्यः धूपो नमः दीपो नमः ॥ अपसव्येन । समस्तमातापितृभ्यः । सव्येन । गायत्र्यै नमः ओंभूर्भुवःस्वः ३ सुभगायै विद्महे ३ अद्य तावत् । महागणपतेः० ब्राह्म्याः माहेश्वर्याः कौमार्याः वैष्ण-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

व्याः वाराह्याः नारसिंह्याः ऐन्द्र्योः गौर्याः पद्मायाः शच्याः मेधायाः सावित्र्याः विजयायाः जयायाः देवसेनायाः स्वाहायाः सुधायाः मातॄणां लोकमातॄणां धृतेः तुष्टेः पुष्टेः आत्मदेवतायाः ललितायाः उमायाः गौर्याः अम्बिकायाः सलिलाश्रयायाः भगाह्याः भगान्याः अनुमत्याः राकायाः सिनीवाल्याः कुह्वयाः धाव्याः सर्वेश्वर्याः अन्नेश्वर्याः एकान्तवासिन्याः दुर्गाक्षेत्रगणेश्वरदेवतानां मातृमण्डलदेवतानां ॥ सीमन्तकरणदेवतानां सद्योद्धरणदेवतानां इन्द्रस्य इन्द्राण्याः कामायाः भगायाः ह्रियाः श्रियाः लक्ष्म्याः तुष्ट्याः पुष्ट्याः विश्वावसोः गन्धर्वराजस्य गोदानदेवतानां अलक्ष्मीनिर्णोदनदेवतानां [रजोदोषार्थे] "अर्यम्णः प्रजापतेः हविष्कल्पदेवतानां" इन्द्राण्याः वरुणान्याः गन्धर्वान्याः उदकान्याः अग्नेः जीवपुत्रस्य प्रजापतेः महाराजस्य स्कन्दस्य अर्यम्णः भगायाः प्रजानकस्य हविष्पुण्यदेवतानां अग्नेः सोमस्य मित्रस्य वरुणस्य

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

इन्द्रस्य उदकस्य भगस्य अर्यम्णः पूष्णः त्वाष्टुः राज्ञः प्रजापतेः कुम्भस्य वैश्रवणस्य ईशानस्य वराहोमदेवतानां अग्नेः पुष्टिपतेः प्रजापतेः महाप्रस्थानदेवतानां कन्यासंस्कारदेवतानां वासुदेवस्य० विष्णुपश्चायतनदेवतानां इन्द्रस्य वज्रहस्तस्य हेरुकादीनां आत्मनो वास्तुनः० मातृकादेवीसन्तोषणार्थमर्चामहं करिष्ये ओंकुरुष्व ॥ महागणपतेरिदमासनम् । महागणपतये युष्मान्वः पूजयामि ओंपूजय । महागणपतिं० ब्राह्मीं महेश्वरीं कौमारीं वैष्णवीं वाराहीं नारसिंहीं ऐन्द्रीं गौरीं पद्मां शुचीं मेधां सावित्रीं विजयां जयां देवसेनां स्वाहां सुधां मातरं लोकमातरं धृतिं तुष्टिं पुष्टिं आत्मदेवतां ललितां उमां गौरीं अम्बिकां सलिलाश्रयां भगाहीं भगाद्यीं अनुमतिं राका सिनीवालीं कुहूं धात्रीं सर्वेश्वरीं अन्नेश्वरीं एकान्तवासिनीं दुर्गाक्षेत्रगणेश्वरदेवताः मातृमण्डलदेवताः ॥ सीमन्तकरणदेवताः खट्वोद्धरणदेवताः इन्द्रं इन्द्राणीं कामां भगां ह्रियं

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

श्रियं लक्ष्मीं तुष्टिं पुष्टिं विश्वावसुं गन्धर्वराजं गोदान-देवताः अलक्ष्मीनिर्णोदनदेवताः (रजोदोषार्थे) अर्य-माणं प्रजापतिं हविष्कल्पदेवताः इन्द्राणीं वरुणानीं गन्धर्वानीं उदकानीं अग्निं जीवपुत्रं प्रजापतिं महाराजं स्कन्दं अर्यमाणं भगां प्रजानकं हविष्पुरयदेवताः अग्निं सोमं मित्रं वरुणं इन्द्रं उदकं भगं अर्यमाणं पूष्णं त्वा-ष्ट्रारं राजानं प्रजापतिं कुम्भं वैश्रवणं ईशानं वरहोम-देवताः अग्निं पुष्टिपतिं प्रजापतिं महाप्रस्थानदेवताः क-न्यासंस्कारदेवताः वासुदेवं विष्णुपश्चात्तनदेवताः इन्द्रं वज्रहस्तं हेरुकादीन् एता देवता आवाहयिष्यामि ओं आवाहय ॥ पाद्यार्थेउदकं नमः । शन्नो देवी । ला-जाश्च । महागणपतये पाद्यं नमः ॥ पुनः शन्नो देवी आपः क्षीरं० । महागणपते० ब्राह्मि माहेश्वरि कौमा-रि वैष्णवि वाराहि नारसिंहि ऐन्द्रि गौरि पद्मे शचि मेधे सावित्रि विजये जये देवसेने स्वाहे सुधे मातरः लोकमातरः धृते तुष्टे पुष्टे आत्मदेवते ललिते उमे गौरि

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अम्बिके सलिलाश्रये भगाहि भगाचि अनुमते राके सिनीवालि कुहूः धात्रि सर्वेश्वरि अन्नेश्वरि एकान्तवासिनि दुर्गाक्षेत्रगणेश्वरदेवताः मातृमण्डलदेवताः सीमन्तकरणदेवताः सद्योद्धरणदेवताः इन्द्र इन्द्राणि काम भग ह्रीः श्रीः लक्ष्मीः तुष्टे पुष्टे विश्वावसो गन्धर्वराज गोदानदेवताः अलक्ष्मीनिर्णोदनदेवताः [रजोदोषार्थे] अर्यमन् प्रजापते हविष्कल्पदेवताः । इन्द्राणि वरुणानि गन्धर्वाणि उदकानि अग्ने जीवपुत्र प्रजापते महाराज स्कन्द अर्यमन् भग प्रजानक हविष्पुण्यदेवताः अग्ने सोम मित्र वरुण इन्द्र उदक भग अर्यमन् पूषन् त्वाष्टः राजन् प्रजापते कन्याहोमदेवताः अग्ने सोम मित्र वरुण इन्द्र उदक भग अर्यमन् पूषन् त्वाष्टः राजन् प्रजापते कुम्भ वैश्रवण ईशान वरहोमदेवताः अग्ने पुष्टिपते प्रजापते महाग्रस्थानदेवताः कन्यासंस्कारदेवताः । वासुदेव विष्णुपञ्चायतनदेवताः इन्द्र वज्रहस्त हेरुकाद्याः इदं वोऽर्घ्यं नमः ॥ महागणपतये समालभनं

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

गन्धो नमः अर्घो नमः पुष्पं नमः । तद्विष्णोः । जातवेदसे इति च कलशे पुष्पाणि । अथाग्निकर्म । पात्रं तिला० । परिसमूह्य ९ आदौ पञ्च । अग्नये समनमत् ८ । उत्तरतः संस्तीर्य । सावित्राणि महागणपतये ब्राह्म्यै १६ वासुदेवाय इन्द्राय वज्रहस्ताय वटुकादिभ्यः जुष्टं निर्वपामि एवं प्रोक्षामि । आज्यभागान्तं । गणपतिध्यानं निषसीदेत्यन्नहोमं विधाय ॥ (यजमानपत्नीमानीय मातृकापूजनं यथा) तीर्थे स्नेयं वसोपवित्रं आशीर्वादं परमात्मने । यत्रास्ति माता । अत्र तावत् महागणपतये ब्राह्म्यै १६ धूपदीपः । गणेशार्थं मृत्पिण्डं संस्थाप्य । आद्याः पञ्च घृतैः प्रोक्ताः मधुमांसान्वितं द्वयम् । दधिक्राव्णेति मन्त्रेण वर्तयेद्भक्तगोलकान् । आनो भद्रेति सूक्तेन स्थापयेदन्नगोलकान् । आनोभद्रेति पठित्वाऽन्नमयै नमः (इत्येवं सप्त) पात्रान्तरे तु तदन्नं नैवेद्यार्थं तु रक्षयेत् ॥ ब्राह्म्याद्याः सप्तकोटेषु घृतधारास्तु सप्त च । गौर्याद्या देवसेनाद्याः शिरोवस्त्रे वि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

[illegible]ते । पुष्ट्यात्मदेवते स्वस्मिल्ललितायाश्च कुड्यके [illegible]क्तपिण्डेष्वनुमत्याद्याश्च सप्ताथ कुम्भके । एकान्तवासिनीत्येवं मातृकार्चनभूमिकाः ॥ एवं संस्थाप्य । संन्त्र सृजामि । अश्विनोः । गायत्र्यै नमः ३ सुभगायै विझहे २ महागणपतेः द्वादेवानां ब्राह्म्याः १६ मातृमण्डलदेवतानां आत्मनो० अमुककर्मनिमित्तं मातृकादेवीसन्तोषणार्थं मातृमण्डलपूजनमर्चामहं करिष्ये । दक्षिणान्तं कृत्वा । भद्रं पश्येमेति चतुर्नर्तनं च कृत्वाज्यदर्शनं कुर्यात् ॥ [illegible]जमानमानीय । पशूपहारमनु । आज्यहोमं तर्पणं च । ओंकारो यस्येति यवतिलहोमं तर्पणं पुरुषसूक्तलक्ष्मीसूक्तरुद्रमन्त्रं सतर्पणं विधाय वध्वाः वरस्य च स्नानं कार्यम् ॥ ततो निसरणस्थले ( उजस मञ्जलिवथ ) स्वस्तिकरेखायां पीठिकां विधाय । तीर्थे स्नेयं यत्रास्ति माता धात्र्यै विधात्र्यै देहल्यै विश्वरूपिण्यै शक्त्ये अथवा पृथिव्यै अग्नये ऋग्वेदाय ब्रह्मणे छन्दोभ्यः अन्तरिक्षाय वायवे यजुर्वेदाय ब्रह्मणे छ० दिवे सूर्याय सामवेदाय ब्रह्मणे

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ॐ० दिग्भ्यः चन्द्रमसे अथर्वणवेदाय ब्रह्मणे छन्दोभ्यः पीठे-
श्वरदेवताभ्यः धूपदीपः संव्व० सृजामि अश्विनोः ॐगायत्र्यै
नमः पीठेश्वर्यै विद्महे सर्वाधारायै धीमहि तन्नः शक्तिः प्रचो-
दयात् ३ अद्य तावत् धात्र्याः विधात्र्याः देहल्याः वि-
श्वरूपिण्याः (मध्ये) शक्तेः । अथवा । पृथिव्याः अ-
ग्नेः ऋग्वेदस्य ब्रह्मणः छन्दसां अन्तरिक्षस्य वायोः
यजुर्वेदस्य ब्रह्मणः छन्दसां दिवः सूर्यस्य सामवेदस्य
ब्रह्मणः छन्दसां दिशां चन्द्रमसः अथर्वणवेदस्य ब्रह्मण
छन्दसां (मध्ये) पीठेश्वरदेवतानां आत्मनो कन्यायाः वर-
स्य वा संस्कारनिमित्तं पीठेश्वरदेवतापूजनमर्चामहं करि-
ष्ये । दक्षिणान्तं । ततः कन्याचतुष्कगृहीतकोणवस्त्रा-
न्तरिते वधूवरयोःशिरसि सर्वौषधिजाफलयुतां जलधारां
त्यजेत् ॥ सर्वगन्धैः फलोत्तरैः सशिरस्कं स्नापयित्वाऽ-
हतेन वाससा प्रच्छाद्य । सावीर्हि देव० ॐगायत्र्यै नमः
३ पृच्छां विसर्ज्य । आपन्नोस्मि । नमो ब्रह्मणे
स्नापयित्वाग्निमग्रडपमानीय । या आपो दिव्याः । ति-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

कं । आज्यदर्शनं । देवीसूक्तं । रक्षोघ्नमन्त्रं । ऋतुति-
थ्यादि । विमुच्य । नयामि । इति मातृकायागविधिः

ततो जातकरणनामकरणे । कन्यासंस्कारं ब्राह्मणपूजनं वैश्वदेवं नान्दीमुखादि सर्वं विदध्यात् ॥

अथ कन्यासंस्कारः । तत्र सामग्री समिधां द्वयं कङ्कणार्थं द्वयं निर्व्रणबन्धयुतं केशपक्षार्थं द्वयं कांस्यपात्रवादनार्थं पुनः पलाशशाखा रक्तसूत्रयुता ईशाने मोचनार्थं कुंकुमचन्दनकर्पूरादि हविष्कल्पार्थं ॥ आदौ सीमन्तकरणम् । प्रसिमूह्य ६ आदौ पञ्च । न निर्वापः । आज्यभागान्तं । कुमारीमानीय । तृतीये गर्भमासे सीमन्तं कारयते । शुद्धपक्षस्य पुण्याहे पर्वणि वा यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा । पश्चादग्नेर्दर्भेषु प्रागासीनायाः प्रत्यगासीना सर्वान्केशान्प्रमुमुच्य प्रसादयते ॥ यं सीमन्तं कङ्कतस्ते चकार यद्वा क्षुरः परिवज्या वपंस्ते । स्त्रीषुरूपमश्विनौ तन्विधत्तं पौंस्येनेमं संसृजतं वीर्येण ॥ इन्द्राणी चक्रे कङ्कतं ससीमन्तं विसर्पतु । पुनः प[illegible]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

भ्यो जायन्दा अग्ने प्रजया सह ॥ पुनः पत्नीमग्निरदादाऽऽयुषा सह वर्चसा । दीर्घायुरस्या यः पतिर्जीवातु शरदः शतम् (इति त्रिःश्वेतया शलल्या शमीशाखया सपलशया ससीमन्तं विचिनोति ॥ यास्ते राक इति पृथक्केशपक्षौ सन्नह्यति ।) यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ [नीललोहितेन सूत्रेण केशान्ग्रन्थयेत् ॥) नीललोहितं भवति कृत्यासक्तिर्व्यज्यते । एधन्ते अस्या ज्ञातयः पतिर्बंध्येषु बध्यताम् ॥ या आपो दिव्याः । ये के च ज्मेत्याज्यप्रधानम् । ऋतुतिथिः । विमुच्य ॥ इति सीमन्तकरणम् ॥ १ ॥

अथ सद्योद्धरणम् । परिसमूह्य ६ आदौ पञ्च । न निर्वापः । सद्योद्धरणदेवताभ्यः इदमाज्यमर्पयामि नमः आज्यभागान्तं । आज्यप्रधानं । इन्द्राणीमासु नारीषु० नाहमिन्द्राणी० । ऋतुतिथ्यादि । इति सद्योद्धरणम्

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

॥ २ ॥

अथ गोदानम् । परिसमूह्य ९ आदौ पञ्च । इ-
न्द्राय इन्द्राण्यै कामाय भगाय ह्रियै श्रियै लक्ष्म्यै
तुष्ट्यै पुष्ट्यै विश्वावसवे गन्धर्वराजाय गोदानदेवताभ्यः
जुष्टं निर्वपामि । एवं प्रोक्षामि । आज्यभागान्तं ।
( ततः कांस्यपात्रे हिरण्यमलङ्करणीयं सर्वं समुत्क्षिप्य
यजमानहस्तेन । हिरण्यवर्णाः शुचयः १ यासां देवा
२ यासां राजा ३ शिवेन मा ४ इति चतुर्भिरभि-
षिच्य वक्ष्याः संकल्पं दद्यात् ॥ ) सावित्राणि० अद्य
तावत् आत्मनो० कन्योद्वाहनिमित्तं सूर्यदैवतं सौवर्णं
चन्द्रदैवतं रौप्यं अग्निदैवतं कांस्यादि सर्वमलङ्करणीयं प्र-
जाभ्यस्त्वा ददानि ३ सावित्राणि रायस्पोषाय त्वा
प्रतिगृह्णामि । क इदं कस्मै अदात् ॥ ( ततो गोदा-
निकैर्मन्त्रैः कन्यामलङ्कृत्य चतुष्पादे भद्रपीठे दक्षिण-
तोऽग्नेः प्राङासीनामुपविश्याऽविधवाः स्त्रियः कन्या वा
ब्राह्मणः माता पिता गुरुश्च सप्तमस्तां सहस्रच्छिद्रेण

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

विवाहे ११

पवित्रेण स्नापयित्वाऽऽहतेन वाससा प्रच्छाद्य ॥) सावीर्हिं देव (ततो विप्रहस्तेनाभिषेचनम्) हिरण्यवर्णाः शु ४ आपो हिष्ठा ३ एनव्याघ्रं परि ६ ॥ स्थालीपाकस्य । इन्द्राय १२ प्रधानान्तरं कांस्यपात्रं "टोर" समिद्भ्यां "शुनं वहेति" मन्त्रेण वादयेद्गीतनृत्यं च कारयेत् । शुनं वहाशुनं नराः शुनं कृषतु लाङ्गुलम् । शुनं वरत्रा बध्यन्तां शुनमुष्ट्रामुदिङ्गय १ शुनासीराविमांवाचं जुषेथां यद्दिवि चक्रथुः पयः तेनेमामुपासिञ्चतम् २ अर्वाची सुभगे भव सीते वन्दामहे त्वा । यथानः सुभगासासि यथानः सुफलासासि ३ इन्द्रःसीतां निगृह्णातु तां पूषा नियच्छतु । सा नः पयस्वती दुहामुत्तरामुत्तरां समाम् ४ शुनं नः फला विकृषन्तु भूमिं शुनंकीनाशा अभियन्तु वाहैः । शुनं पर्जन्यो मधुना पयोभिः शुना सीरा शुनमस्मासु धत्तम् ५ सुप्रजस्त्वाय गोमुखाः प्रक्रीडयन्त कन्या सुमनस्यमाना स्वाहा सहेन्द्रीणी कृतमङ्गला ६ । ऋतुतिथिः । इति गोदानम्

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

॥ ३ ॥

अथालक्ष्मीनिर्णोदनं । त्रिकाहोमपर्यायम् । परिसमूह्य ९ पुरस्तात् ९ आज्यमुत्पूय यैःकैश्चिद्दर्भाग्रैः स्रुचमुन्मृज्य उपयामरहितं आत्मनो त्रिकाहोमदेवताभ्य इदमाज्यमर्पयामि नमः ॥ (याज्ञिकस्य वृक्षस्य प्रागायतां शाखां सकृदाच्छिन्नां सूत्रतन्तुना प्रच्छाद्य "तोलमूर नारेवन गंडेत । सावित्राखीति वधूर्गृहीत्वा) या ते अलक्ष्मी मातृमयी पितृमयी संक्रामणी सहजा वापि काचित्तां तिष्येण सह देवतायाः निर्णुदामि सा द्विषन्तं गच्छतु तिष्यबृहस्पतिभ्यां नमो नमः (इति कलशं प्रति ऐशान्यां प्रक्षिपेत्) "तत स्रुवेणाज्यहोमः ।" तत्रश्रिये १ बृहस्पतिरति २ बृहस्पतिः समज ३ यमो दाधार ४ यथा पञ्च ५ त्रिकद्रुकेभिः ६ मृळनो रुद्रो त ७ अश्यामते ८ त्वेषं वयं ९ अवते हेळो १० उदुत्तमं ११ इमं मे वरुणा १२ ओंभूर्लोकाय १३ ओंभुवो १४ ओंस्वर्लो १५ ओंभूर्भुव १६ अग्निर्मूर्धा १७ ज-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

भा वामिन्द्राणी १८ अयमिह १९ अयं ते योनि २० स्तमो देवानां । उपप्र २१ अस्य प्रत्ना २२ अरुणे । कदा २३ अक्षोटसहितं । परि ते दूळभो २४ विमुच्य नयामि इत्यऽलक्ष्मीनिर्णोदनम् ॥ ४ ॥

अथ द्वादशवर्षोत्तीर्णाया रजोदोषनिवारणार्थं हविष्कल्पम् ॥ परिसमूह्य ६ आदौ पञ्च । अर्यम्णे प्रजापतये जुष्टं निर्वपामि एवं प्रोक्षामि । आज्यभागान्तं । प्रधानं । अर्यम्णे स्वाहे(ति दक्षिणे) प्रजापतये स्वाहा (इत्युत्तरे) प्रधानानन्तरं कुंकुमचन्दनादि स्रुवेणाज्याहुतीः सप्तदश जुहुयात् । अग्नये सोमाय मित्राय इन्द्राय वरुणाय बृहस्पतये रुद्राय स्कन्दाय वात्सीपुत्राय भगाय भगनक्षत्रेभ्यः कान्त्यै पुष्ट्यै भद्रकाल्यै पूष्णे त्वाष्ट्रे महिष्यकाय स्वाहा १७ ऋतुतिथ्यादि ॥ इति हविष्कल्पम् ॥ ५ ॥

अथ हविष्पुण्यम् ॥ परिसमूह्य ६ आदौ पञ्च । इन्द्राण्यै वरुणान्यै गन्धर्वाण्यै उदकान्यै अग्नये जीव-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

पुत्राय प्रजापतये महाराजाय स्कन्दाय अर्यम्णे भगाय प्रजानकाय हविष्पुण्यदेवताभ्यः जुष्टं निर्वपामि इदं प्रोक्षामि ॥ आज्यभागान्ते । या आपो दिव्याः । प्रधानं । इन्द्राण्यै १३ ऋतुतिथ्यादि ॥ इति हविष्पुण्यम् ॥ ६ ॥

अथ कन्याहोमः ॥ परिसमूह्य ९ आदौ पञ्च । अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णो पूष्णो त्वाष्ट्रे राज्ञे प्रजापतये कन्याहोमदेवताभ्यः जुष्टं निर्वपामि । आज्यभागान्तं । या आपो दिव्याः । प्रधानं । अग्नये स्वाहा १३ ऋतुतिथ्यादि ॥ इति कन्याहोमः ॥ ७ ॥

अथ वरहोमः ॥ परिसमूह्य ९ आदौ पञ्च । अग्नये सोमाय मित्राय वरुणाय इन्द्राय उदकाय भगाय अर्यम्णो पूष्णो त्वाष्ट्रे राज्ञे प्रजापतये कुम्भाय वैश्रवणाय ईशानाय जुष्टं निर्वपामि । आज्यभागान्तं । या आपो दिव्याः । प्रधानं । अग्नये १५ ऋतुतिथ्यादि ।

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

इति वरहोमः ॥ ८ ॥

अथ महाप्रस्थानमुद्वाहपर्यायम् ॥ परिसमूह्य ६ आदौ पञ्च । अक्षतचरौ अग्नये पुष्टिपतये प्रजापतये जुष्टं निर्वपामि । आज्यभागान्तं । सफलीकृत्योत्पृष्टा पिनष्ट्यलङ्कारेण काले सपवित्रे पात्रे सक्तून् सपतिचतस्रोष्टौवाऽविधवाः शाकमिश्रिताभिर्मरिचशर्करादिभिः साधिताभिः स्त्रियोऽन्येनान्नेन च ब्राह्मणायित्वा वीणा गायद्भिः सह सङ्गायेयुरपि वा चतुरनर्तनं कुर्यात् ॥ क्रीडं वा शर्धो मरुतमनर्वणं रथे शुभम् । काण्ठा अभि प्रगायत इत्यनया गायत्र्या गणितऋत्विगेवानुमन्त्रयते ॥ (यावत्कन्याहोमं चतुष्पादे भद्रपीठे प्राङासीनां कन्यामुपवेशयेत् । कन्यासंस्कारहोमानन्तरं वधूहस्ते खड्गं संस्थाप्य त्रिरावर्तमग्निं प्रदक्षिणी भवती रक्षार्थं पूषा मामिति पाठयति ॥) पूषा मा प्रपथे पातु पूषा मा पशुपा पातु पूषा माधिपतिः पातु प्राची दिगग्निर्देवता अग्निं स ऋच्छतु यो मैतस्या दिशो भि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

दासति [इति पूर्वतः] एवं । दक्षिणा दिगिन्द्रो देवतेन्द्रं स ऋच्छतु यो मैतस्या० ॥ प्रतीची दिक्सोमो देवता सोमं स ऋच्छतु यो मै तस्या० ॥ उदीची दिक्मित्रावरुणौ देवता मित्रावरुणौ स ऋच्छतु यो मै त० ॥ ऊर्ध्वा दिग्बृहस्पतिर्देवता बृहस्पतिं स ऋच्छतु यो मै त० ॥ इयं दिगदितिर्देवताऽदित्यं स ऋच्छतु यो० ॥ (सर्वतः) ज्योतिषे तन्तव आशिषमाशास्ते साऽनुमा तनूः ॥ खड्गं भूमौ त्यक्त्वा । शन्नो देवी इति उपस्पृशेत् ॥ ततोऽक्षतसक्तूनां प्रधानं । अग्निं पुष्टिपतिं प्रजापतिं च यजेत । अग्निर्नो रयिं १ प्रजापते नहि २ ऋतुतिथिः । अग्नेर्यविष्टपूजनं । पूर्णां दत्वा विमुच्य ॥ ततो वैश्वदेवं स्विष्टकृद्विना नान्दीमुखश्राद्धं कृत्वा अग्नये स्विष्टकृते स्वाहे (त्यैशान्यां) कलशपृच्छां विसर्ज्य ॥ नमो ब्रह्मणे (यजमानपत्न्याः देवततभच्यनपूजा) अनुमत्यै १ राकायै २ सिनीवाल्यै ३ कुह्वै ४ धात्र्यै ५ सर्वेश्वर्यै ६ ज्ञानेश्वर्यै

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

समालभनं गन्धो नमः अर्घो नमः पुष्पं नमः । उदक-लशम् । इति कन्यासंस्कारविधिः ॥

अथ नान्दीमुखश्राद्धविधिः ।

नित्ये नान्दीमुखे तीर्थे द्विःकालं भोजनक्रिया । अष्टकाग्रायणे नोक्ता लौगाक्षिमुनिरब्रवीत् ॥ शान्ताकारं जितं ते पुण्डरीकाक्ष ३ अद्य तावत् (सव्येनैव सर्वं कर्म ।) नान्दीमुखीनां मातॄणां पितामहीनां प्रपितामहीनां । नान्दीमुखानां पितॄणां पितामहानां प्रपितामहानां । नान्दीमुखीनां मातामहीनां प्रमातामहीनां वृद्धप्रमातामहीनां । नान्दीमुखानां मातामहानां प्रमातामहानां वृद्धप्रमातामहानां ॥ आत्मनो० सुतानामभ्युदयनिमित्तं नान्दीमुखं श्राद्धं वैश्वदेवपूर्वकं द्वादशदैवतमर्चामहं करिष्ये ऊँकुरुष्व । यवान्विकीर्य । सत्यस्य वसोरिदमासनं नमः । सत्याय वसवे त्वां पूजयामि ऊँपूजय । सत्यं वसुमावाहयिष्यामि । यवान्विकीर्य ॥ शन्नो देवी लाजाश्च । भगवन्तः पाद्यं २ सत्याय वसवे पाद्यं न-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

मः । शन्नो देवी । आपः क्षीरं । सत्य वसो इदं वोऽर्घ्यं नमः । सत्याय वसवे समालभनं गन्धोर्घपुष्पधूपदीपवासो नमः ॥ सत्यस्य वसोरर्घ्यदानाद्यर्चनविधिः सर्वः परिपूर्णोऽस्तु ॥ नान्दीमुखीनां मातॄणां पितामहीनां प्रपितामहीनां नान्दीमुखानां पितॄणां पितामहानां प्रपितामहानां । नान्दीमुखीनां मातामहीनां प्रमातामहीनां वृद्धप्रमातामहीनां । नान्दीमुखानां मातामहानां प्रमातामहानां वृद्धप्रमातामहानां द्वादशदैवतानां पितॄणामिदमासनं नमः । नान्दीमुखेभ्यो द्वादशदैवतेभ्यः पितृभ्यो युष्मान्वः पूजय । नान्दीमुखान्द्वादशदैवतान्पितॄनावाहयिष्यामि । यवान्विकीर्य । शन्नो देवी । लाजाश्च । नान्दीमुखेभ्यो द्वादशदैवतेभ्यः पितृभ्यः पाद्यं नमः । शन्नो देवी । आपः क्षीरं । नान्दीमुखा द्वादशदैवताः पितरः इदं वोर्घ्यं नमः । नान्दीमुखेभ्यो द्वादशदैवतेभ्यः पितृभ्यः समालभनं गन्धो नमः अर्घपुष्पधूपदीपवासो नमः ॥ नान्दीमु-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

खानां द्वादशदैवतानां पितृणामर्घ्यदानाद्यर्चनविधिः स-
र्वः परिपूर्णोस्तु ॥ सत्याय वसवे इदमन्नं भृतमभिघा-
र्य । इदमन्नं नान्दीमुखेभ्यो द्वादशदैवतेभ्यः पितृभ्यः
भृतमभिघार्य ॥ प्रक्षाल्य तुण्डलान्पवित्रान्तर्हितानावप-
ति प्रक्षाल्याग्रतो भेक्षणमवदधाति ॥ अग्नौ करवाणि
ओंकुरु सोमाय पितृमते स्वधा नमः अग्नये कव्यवाह-
नाय स्वधा नमः क्षीरं घृतं वाऽऽसिच्य । सत्याय वसवे
अन्नं नमः २ अन्नं मधु २ पृथिव्यै नमः वैष्णव्यै
नमः विष्णुर्हव्यं रक्षसु । सत्याय वसवे यथोपस्थितं
दत्तं दास्यमानेन सह सव्यञ्जनममृतमन्नं नमः ॥ ना-
न्दीमुखीभ्यो मातृभ्यः पितामहीभ्यः प्रपितामहीभ्यः।
नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः।
नान्दीमुखीभ्यो मातामहीभ्यः प्रमातामहीभ्यः वृद्धप्र-
मातामहीभ्यः । नान्दीमुखेभ्यो मातामहेभ्यः प्रमाता-
महेभ्यो वृद्धप्रमातामहेभ्यो द्वादशदैवतेभ्यः पितृभ्यः
अन्नं नमः २ अन्नं मधु २ विष्णुः कव्यं रक्षस्व ॥

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नान्दीमुखेभ्यो द्वादशदैवतेभ्यः पितृभ्यो यथोपस्थितं दत्तं दास्यमानेन सह सव्यञ्जनममृतमन्नं नमः । अद्य दिने अद्ययथा० । शन्नो देवी० । सत्याय वसवे अपोशानं नमः । नान्दीमुखेभ्यो द्वादशदैवतेभ्यः पितृभ्यः अपोशानं नमः । अमृतेन सह भोक्तव्यमसुरा निवर्तन्तां नान्दीमुखाः पितर आगच्छन्तु ॥ (पूर्वाग्रान्दूर्वा आस्तीर्य ।) चीरयवैरवनेजनं नमः । (दधिचधिरान् यवमधुमिश्रान् पिण्डान् श्रीफलसन्निभान् कृत्वा) ॐगायत्र्यै नमः ३ जितं ते ३ सव्यं जानुं भूमौ निधाय नैर्ऋतकोणादारभ्य ईशानकोणं तावत् स्थाप्याः ॥ अद्य तावत् नान्दीमुख्यः मातरः एष वः पिण्डो ये चात्र वोनु तान्वै नमः । अप उपस्पृश्य । नान्दीमुख्यः पितामह्यः एव वः पि० । अप उ० । नान्दीमुख्यः प्रपितामह्यः एव वः पि० ॥ ॐगायत्र्यै नमः ३ जितं ते० अद्य तावत् । नान्दीमुखाः पितरः एष वः पि० नान्दीमुखाः पितामहाः एष वः पि० । ना-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

न्दीमुखाः प्रपितामहाः एष वः पि० ॥ ओंगायत्र्यै नमः ३ जितं ते० ३ अद्य तावत् नान्दीमुख्यः मातामह्यः एष वः पिण्डो येचात्र वोनु तान्त्रै नमः । अपउपस्पृश्य । नान्दीमुख्यः प्रमातामह्यः एष वः पि० । नान्दीमुख्यः वृद्धप्रमातामह्यः एष वः पि० ॥ ओंगायत्र्यै ३ जितं ते ३ अद्य तावत् नान्दीमुखाः मातामहाः एष वः पि० प्रमातामहाः वृद्धप्रमातामहाः एष वः पिण्डो येचात्र वोनु तान्वै नमः । अपउप० ॥ शोभनं वासो नमः वीरान्नं नमः । नान्दीमुखेभ्यो द्वादशदैवतेभ्यः पितृभ्यः समालभनं गन्धो नमः । अर्घो नमः पुष्पं नमः धूपो नमः दीपो नमः भक्ष्यभोज्यफलमूलबलिनैवेद्यमन्नं नमः ॥ नान्दीमुखेभ्यो० हिमपानाद्वृद्धिः क्षीरपानाद्वृद्धिः मधुपानाद्वृद्धिः यवोदकाद्वृद्धिः उदकतर्पणाद्वृद्धिः हिमं हिमं रजतं २ । वसन्ताय नमः ६ [षड्तुतर्पणान्ते निर्वर्तयेत् ।] श्रिय एवैनं तच्छ्रियमाददाति सन्ततं सन्तत प्रकुरु सन्तत्यै सन्धीयते प्रजया च पशुभि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

र्य एवं वेद ॥ ऊर्जासि नमस्कारं करोमि नमः । सावित्राणि नैवेद्यम् । ततो विकिरम् । नान्दीमुखानां ये केचित्पितॄणामनुयायिनः विकिरान्नभुजस्तेषामन्नं तृप्त्यर्थमस्त्विदम् ॥ विश्वेदेवास्तृप्ताः प्रीताश्च ते नित्यं सर्वान्कामान्दिशन्तु नः ॥ नान्दीमुखेभ्यो द्वादशदैवतेभ्यः पितृभ्य आचमनीयं नमः ॥ सत्याय वसवे आचमनीयं नमः । यो विश्वमाद्य भुवनस्य गोप्ता येनेदं विश्वं सचराचरं च । स वै देवो यजमानं च मां च या दक्षिणा सर्वमेतत्पुनातु । भद्रं पश्येम० । शन्नो देवी । नान्दीमुखेभ्यो० दक्षिणायै यवहिरण्य० । नान्दीमुखा द्वादशदैवताः पितरः प्रीयन्तां प्रीता भवन्तु ॥ ॐगायत्र्यै नमः ३ जितं ते ३ नान्दीमुखीनां मातॄणां पितामहीनां प्रपितामहीनां । नान्दीमुखानां पितॄणां पितामहानां प्रपितामहानां । नान्दीमुखीनां मातामहीनां प्रमातामहीनां वृद्धप्रमातामहीनां । नान्दीमुखानां मातामहानां प्रमातामहानां वृद्धप्रमातामहानां द्वादशदैव-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तानं पितॄणां सुतस्याभ्युदयिकं वैश्वदेवपूर्वकं नान्दीमुखश्राद्धमच्छिद्रं सम्पूर्णमस्तु एवमस्तु ॥ नान्दीमुखेभ्यो द्वादशदैवतेभ्यः पितृभ्यः यवोदकं नमः उदकतर्पणं नमः । इति नान्दीमुखश्राद्धविधिः ॥

॥ अथेहकीलपूजा ॥

[आदौ इहकीलकाशिरस्तले धान्यं बहुबीजं काञ्चुकरसं प्रक्षिप्य ॥[ शुक्लाम्बरधरं० । तीर्थस्नेयं । वसोः पवित्रं० । परमात्मने । स्वप्रकाशो । वनस्पति । नमो धर्म । यत्रास्ति माता । अद्य तावत् महागणपतये ब्रह्मणे कूर्माय ध्रुवाय अनन्ताय हरये लक्ष्म्यै कमलायै शिख्यादिभ्यः पञ्चचत्वारिंशद्वास्तोष्पतिदेवताभ्यः धूपदीपः ॥ मृद्भस्मगोमयैः स्नाप्य काषायफलवारिभिः ॥ आक्रम्य वाजिन् । प्रसद्य भस्मना । इह गावः । याः फलिनी । उदुत्तमं । ( तत इहकीले एकविंशतिस्नानानि ) ( अम्बुना ) ॐगायत्र्यै नमः १ ( प्रथमं स्नानं गायत्र्याभिमन्त्रितं ) ( भस्मना ) निर्दग्धं

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

रक्षो २ (मृदद्भिः) उदुत्तमं ३ (गोमयेन) इह गावः ४ (सर्षपेण) रक्षोहणं ५ (त्रेताग्निभस्म) बृहत्साम क्षत्रभृद्वृद्धवृष्ण्यं त्रिष्टुभौजः शुंभितमुग्रवीरः। इन्द्रस्तोमेन पञ्चदशेनौज इदं वातेन सगरेण रक्ष ६ [वृषभशृङ्गेण] चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यानाविवेश ७ (क्षीरोदकं) मनसा काममाकूतिं ८ (हिरण्यतोयैः) हिरण्यवर्णां हरिणीं ९ (दर्भपिञ्जलैः) तरत्समन्दि धावति धारासुतोस्यान्धसः। तरत्समन्दी धावति १० (तीर्थतोयैः) इमं मे वरुणश्रुधे ११ (नद्युदकं) इतो न्विन्द्रं स्तवामहेऽहं शुद्धः शुद्धेन साम्ना। शुद्धैरुक्थैर्वावृद्धांसं शुद्ध आशीर्वान्ममत्तु १२ [पर्वताद्धात्रमध्याद्वा] इन्द्रापर्वता १३ [शङ्खतोयैः] वात आवातभेषजं शम्भुमयो भुवि हृदि। प्राण आयूंषि तारिषत् १४ [क्षेत्रमृत्] अश्वक्रान्ते १५ [वाल्मीकमृत्] अग्निर्ऋषिः १६ [रत्नवारि] ऋतं च सत्यं १७

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

(मात्तिकोदकं) मधुवाता ऋ १८ (दाधि) दधि क्राव्णो १९ [सर्वौषधिः] या ओषधयः २० (पञ्चगव्यं) समुद्रादूर्मि २१ ब्रह्मा तृप्यतां [इत्यादिदेवर्षितर्पणाम्] संव्वः सृजामि । अश्विनोः । गायत्र्यै नमः ६ कल्पवृक्षाय विद्महे वनस्पतये धीमहि तन्नः कीला प्रचोदयात् ३ अद्य तावत् महागणपतेः ब्र कू धु अ ह ल् क शिख्यादीनां गृहप्राकारयागदेवतानां इहकीलकादेवतानां आत्मनो गृहाच्छादनानिमित्तं इहकीलकापूजनमर्चामहं करिष्ये ॐकुरुष्व । आवाहयाम्यहं देवं वास्तोष्पतिमतिप्रियम् । अधोमुखं धराकाशादिक्षु सर्वासु व्यापकम् । स्वेच्छावर्णो महा० ॥ भगवन्पु० । पाद्यं । अर्घ्यं । स्नानं । वनस्पते वीड्वङ्गो हि भूयादस्मा सखा प्रतरन्नस्त्ववीर । गोभिः सन्नद्धो असि वीरयस्वा स्थाथाजिह्वीं ययतुजिद्धानि ॥ वास्तोष्पतिसूक्तेन च । अमीवहा० । ब्रह्मणे० स्नानं नमः ॥ गन्धार्घपुष्पपूजा

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

यवे तारकेभ्यः सप्तर्षिभ्यः भूर्लोकाय भुवर्लो स्वर्लो महर्लो जनोलो तपोलो सत्यलो मित्राय वरुणाय पूष्णे धात्रे अर्यम्णे भगाय इन्द्राय सूर्याय विवस्वते दीप्तांशवे प्रकृतये प्रकाशाय मार्तण्डाय इन्द्राय अग्नये यमाय नैर्ऋतये वरुणाय वायवे कुवेराय ईशानाय ब्रह्मणे विष्णवे [पूर्वे] उमायै (दक्षिणे) रुद्राण्यै (पश्चिमे) भद्रङ्कर्यै (उत्तरे) प्रस्थायै (ईशाने) स्वाहायै (अग्नये) शुभङ्कर्यै (नैर्ऋते) गौर्यै (वायवे) श्रियै (ऊर्ध्वे) वागीश्वर्यै (अधः) लोकधात्र्यै (मध्ये) वृत्ताय मन्मथाय अशोकाय सन्तानाय पारिजाताय कल्पवृक्षाय हरिचन्दनाय देवदारवे गजाय ऐरावताय पुण्डरीकाय वामनाय कुमुदाय अञ्जनाय पुष्पदन्ताय सार्वभौमाय सुप्रतीकाय अश्यादित्याभ्यां॰ ब्रह्मणे कू॰ इहकीलदेवताभ्यः अर्घो नमः पुष्पं नमः ॥ वासा पुष्पमालानाडीबन्धनं च । अन्नं नमः । अपोशानं दक्षिणा नैवेद्यम्पूजा॰ । [illegible] चक्रेश्वरलिः । पूर्वस्पृ-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

च्छां सम्पाद्य । उदकतर्पणं । आपन्नोस्मि । कीलोहि भगवान्विष्णुरीश्वराश्च प्रकीर्तिताः । स्थितिं कुर्वन्तु सततमस्मिन्स्थाने सदार्चिताः ॥ आह्वानं० ॥ नमो ब्रह्मणे । इति तर्पणम् ॥ इति इहकीलिकापूजनम् ॥

सामग्री तिलाघृतक्षीरदधिधूपदीपमधुलाजाकुंकुमसर्वौषधिकुशायवासिद्धार्थकासिन्दूरापूपिकानाडीबन्धनसौवर्णपत्रपुष्पार्घपुष्पमालिकाधान्यकञ्चुकरसतीर्थमृत्तिकातीर्थजलवल्मीकमृत्तिकाशंखौषधयश्च ॥

## अथ सन्ध्योपासना

(नमस्कारकरो) श्रीमहागायत्र्यै नमः । सावित्र्यै नमः । सरस्वत्यै नमः ॥ ओंप्रणवस्य ऋषिर्ब्रह्मा, गायत्रं छन्द एव च । देवोऽग्निर्व्याहृतिषु च, विनियोगः प्रकीर्तितः ॥ प्रजापतेर्व्याहृतयः, पूर्वस्य परमेष्ठिनः । व्यस्ताश्चैव समस्ताश्च, ब्राह्ममक्षरमोमिति ॥ व्याहृतीनां समस्तानां, दैवतं तु प्रजापतिः । व्यस्तानामप्यमऽग्निश्च, वायुः सूर्यश्च देवताः ॥ छन्दश्च व्याहृती-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

नामेकाऽक्षराणामुक्ताख्यं, द्व्यक्षराणामऽत्युक्ताख्यम् । विश्वामित्र ऋषिश्छन्दो, गायत्रं सविता तथा ॥ देवतोपनये जप्ये, गायत्र्या योग उच्यते । आवाहयामि गायत्रीं, सर्वपापप्रणाशिनीम् ॥ न गायत्र्या परं जप्यं, न व्याहृतिसमं हुतम् । आगच्छ वरदे देवि, जप्ये मे सन्निधौ भव ॥ गायन्तं त्रायसे यस्माद्गायत्री त्व ततः स्मृता । अग्निर्वायुश्च सूर्यश्च बृहस्पत्याप एव च ॥ इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः । एवमाऽऽर्षं छन्दो दैवतं, विनियोगं चाऽनुस्मृत्य ॥ गायत्र्या शिखामाऽबध्य, गायत्र्यैव समन्ततः । आत्मनश्चापः परिक्षिप्य, प्राणायामं कुर्यात ॥ (अपने आप के छडक करके आञ्जलि करना) ओजोऽसीति गायत्रीमाऽऽवाह्य देवानान्नाऽर्ष ओजोऽसि सहोऽसि बलमऽसि भ्राजोऽसि देवानांधाम नामासि । विश्वमऽसि विश्वायुः सर्वमऽसि सर्वायुरऽभिभूः ॥ (प्राणायामका मंत्र) ऊँभूः ऊँभुवः ऊँस्वः ऊँमहः ऊँजनः ऊँतपः ऊँसत्यं ऊँतत्सवितुर्वरेण्यं,

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात् ओंआ-पो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ॥ (सायं की तीन आचमन करना) ओंअग्निश्च मा मन्युश्च, मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षं, मनसा वाचा हस्ताभ्यां, पद्भ्यामुदरेण शिश्ना । अहस्तदवलुम्पतु, यत्किंचिद्दुरितं मयीदमऽहमाऽपोऽमृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥ (प्रातः की तीन आचमन) ओंसूर्यश्च मा मन्युश्च, मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यद्रात्रा पापमकार्षं, मनसा वाचा हस्ताभ्यां, पद्भ्यामुदरेण शिश्ना । रात्रिस्तदऽवलुम्पतु, यत्किंचिद्दुरितं मयीदमऽहमाऽऽपोऽमृतयोनौ । सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ (मध्याह्न की तीन आचमन) ओंआपः पुनन्तु पृथिवीं, पृथिवी पूता पुनातु माम् । पुनातु ब्रह्मणस्पतिर्ब्रह्म पूतं पुनातु माम् ॥ यदुच्छिष्टमऽभोज्यं वा, यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामाऽऽपोऽसतां च प्रति-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ग्रहं जुहोमि स्वाहा ॥ [छातेको छिडकना] आपो हि-
ष्ठा मयोभुव- [पैरों को] स्ता न ऊर्जे दधात न
[सिरको] महे रणाय चक्षसे [छाते को] यो वः
शिवतमो रस- [पैरों को] स्तस्य भाजयते हनः [सिर
को] उशतीरिव मातरः [सिर को] तस्मा अरंगमाम
वो [छाते को] यस्य क्षयाय जिन्वथ [पैरों को]
आपो जनयथा च नः ॥ [छाते और सिरको फी
मंत्र से छिडकना] हिरण्यवर्णाः शुचयः पावका, यासु
जाता कश्यपो यास्विन्द्रः । या अग्निं गर्भं दधिरे वि-
रूपास्ता न आपः शंस्योना भवन्तु ॥ ओंयासां देवा
दिवि कृण्वंति भक्षयं, या अन्तरिक्षे बहुधा भवन्ति ।
या० ॥ ओंयासां राजा वरुणो याति मध्ये, सत्याऽनृते
अवपश्यञ्जनानाम् । या० ॥ ओंशिवेन मा चक्षुषा पश्य-
ताऽऽपः शिवया तन्वोपस्पृशत त्वचं मे । मधुश्च्युतः
शुचयो याः पावकास्ता न आपः शंस्योना भवन्तु ॥
ओंशन्नो देवीरऽभीष्टये आपो भवन्तु पीतये, शंय्योरऽ-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

भिस्रवन्तु नः ॥ ओं शन्न आपो धन्वन्याः, शन्नः सन्त्वऽनूप्याः । शन्नः समुद्रिया न आपः शमुनः सन्तु कूप्याः ॥ आपो अस्मान्मातरः शुन्धयन्तु घृतेन मा घृतपाः पुनन्तु । विश्वं हिरिप्रं प्रवहन्तु देवीरुदिदाभ्यः शुचिरापूत एमि ॥ इदमापः प्रवहत यत्किञ्चिद्दुरितं मयि । यद्वाहमभिदद्रोह यद्वा शेप उतानृतम् ॥ मुञ्चन्तु मा शपथ्यादऽथो वारुण्यादुत । यथा यमस्य पड्वीशात्सर्वस्मादेव किल्विषात् ॥ यज्जाग्रद्यत्सुप्तः पापमभिजगाम । सर्वस्मान्मा तस्मादेनसः प्रमुञ्चतु ॥ दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखाकरत्प्राण आयूंषि तारिषत् ॥ [बाहे तरफ तीन जलाञ्जलि सूँग के छोडना] ओं द्रुपदादिवेन्मुमुचानः, स्विन्नः स्नात्वी मलादिव । पूतं पवित्रेणेवाऽज्यमाऽऽपः शुन्धन्तु मैनसः ॥ [पानी में दोनो हाथों से तीन आवर्तन करना] ओं ऋतं च सत्यं चाभीद्धात्तपसोऽध्यऽजायत । ततो रात्रिरऽजायत, ततः समु-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

द्रो अर्णवः ॥ समुद्रादर्णवादऽधि, संवत्सरो अ-
जायत । अहोरात्राणि व्यदधद्विश्वस्य मिषतो वशी ॥
सूर्याचन्द्रमसौ धाता, यथापूर्वमऽकल्पयत् । दिवं च
पृथिवीं, चाऽन्तरिक्षमऽथो स्वः ॥ [सिरको छिडकना]
ओंभूः ओंभुवः ओंस्वः ओंमहः ओंजनः ओंतपः ओंस-
त्यम् । [तीन आचमन करना] ओंअन्तश्चरसि भूतेषु,
गुहायां विश्वतो मुखः । त्वं यज्ञस्त्वं वषट्कार, आपो
ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् ॥ [प्राणायाम
करके सूर्यके संमुख तीन जलाञ्जलि छोडना] ॥
ओंभूर्भुवःस्वस्तत्सवितु० ३ ॥ [उपस्थान करना]
ओंउद्वयन्तमसस्परि, ज्योतिष्पश्यन्त उत्तरम् । देवं दे-
वत्राः सूर्यमऽगन्म ज्योतिरुत्तमम् ॥ ओंउदुत्यं जातवे-
दसं, देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥
ओंचित्रन्देवानामुदगादनीकं, चक्षुर्मित्रस्य वरुणस्याऽग्नेः ।
आ प्रा द्यावापृथिवी अन्तरिक्षं, सूर्य आत्मा जगतस्त-
स्थुषश्च ॥ ओंतच्चक्षुर्देवहितं, पुरस्ताच्छुक्रमुच्चरत् । प-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

श्येम शरदः शतं, जीवेम शरदः शतम् ॥ ओंहंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ ओंविभ्राड्बृहत्पिबतु, सोम्यं मध्वायुर्दधद्यज्ञपता अविहुतम् । वात जूतयो, अभिरक्षत्यात्मना, प्रजा पिपर्ति बहुधा विराजति ॥ [विष्णु का ध्यान करना] ओंआनुष्टुभस्य सूक्तस्य, त्रिष्टुबन्तस्य देवता । विश्वात्मा पुरुषः साक्षादृषिर्नारायणः स्मृतः ॥ "ओंपुरुषमेधाः पुरुषस्य नारायणस्याऽऽर्षम् ॥" ओंसहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वाऽऽत्यतिष्ठद्दशांगुलम् ॥ पुरुष एवेदं सर्वं, यद्भूतं यच्च भव्यम् । उताऽमृतत्वस्येशानो, यदन्नेनाऽतिरोहति ॥ एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्याऽमृतं दिवि ॥ त्रिपादूर्ध्व उदैत्पुरुषः, पादोऽस्येहाऽभवत्पुनः । ततो विश्वं व्यक्रामत्साशनाऽनशने अभि ॥ तस्माद्विराडजायत विराजो

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

अधिपूरुषः । स जातो अत्यरिच्यत पश्चाद्भूमिमऽथो पुरः ॥ यत्पुरुषेण हविषा देवा यज्ञमऽतन्वत । वसन्तो अस्याऽऽसीदाऽऽज्यं, ग्रीष्म इध्मः शरद्धविः ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमऽग्रतः । तेन देवा अयजन्त, साध्या ऋषयश्च ये ॥ तस्माद्यज्ञात्सर्वहुतः, संभृतं पृषदाऽऽज्यम् । पशूंस्तांश्चक्रे वायव्यानाऽऽरण्यान्ग्राम्यांश्च ये ॥ तस्माद्यज्ञासर्वहुत ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादऽजायत ॥ तस्मादऽश्वा अजायन्त, ये के चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ यत्पुरुषं व्यदधुः, कतिधा व्यकल्पयन् । मुखं किमऽस्य कौ बाहू, का ऊरू पादा उच्येते ॥ ब्राह्मणोऽस्य मुखमाऽऽसीद्बाहू राजन्यः कृतः । ऊरू तदऽस्य यद्वैश्यः, पद्भ्यां शूद्रो अजायत ॥ चन्द्रमा मनसो जातश्चक्षुः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च, प्राणाद्वायुरऽजायत ॥ नाभ्या आसीदऽन्तरिक्षं, शीर्ष्णो द्यौः सम-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

वर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकानऽकल्प-
यन् ॥ सप्ताऽस्याऽऽसन्परिधयस्त्रिः सप्त समिधः कृताः।
देवा यद्यज्ञं तन्वाना, अबध्नन्पुरुषं पशुम् ॥ यज्ञेन य-
ज्ञमऽयजन्त देवास्तानि धर्माणि प्रथमान्याऽऽसन् ।
ते ह नाकं महिमानः सचन्त, यत्र पूर्वे साध्याः स-
न्ति देवाः ॥ [संहारमुद्रा करके शिवका ध्यान क-
रना] ॐयज्जाग्रतो दूरमुदेति दैवं, तदु सुप्तस्य तथै-
वैति । दूरंगमं ज्योतिषां ज्योतिरेकं, तन्मे मनः शि-
वसंकल्पमऽस्तु ॥ येन कर्माण्यऽपसो मनीषिणो, यज्ञे
कृण्वन्ति विदथेषु धीराः । यदऽपूर्वं यक्षमऽन्तः प्र-
जानां तंन्मे म० ॥ यत्प्रज्ञानमुत चेतो धृतिश्च, य-
ज्ज्योतिरऽन्तरऽमृतं प्रजासु । यस्मान्न ऋते किञ्चन
कर्म क्रियते, तन्मे म० ॥ येनेदं भूतं भवनं भवि-
ष्यत्परिगृहीतमऽमृतेन सर्वम् । येन यज्ञस्तायते सप्तहो-
ता, तन्मे म० ॥ यस्मिन्नृचः साम यजूंषि यस्मिन्प्र-
तिष्ठिता रथनाभाविवाऽराः । यस्मिंश्चित्तं सर्वमोतं प्र-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

जानां, तन्मे म० ॥ सुषारथिरश्वानिव यन्मनुष्यान्ने-
नीयतेऽभीशुभिर्वाजिन इव । हृत्प्रतिष्ठं यदजरं यविष्ठं,
तन्मे म० ॥ अथ य एष एतस्मिन्मण्डले, पुरुषो
यश्चैष हिरण्मयः पुरुषः । अथ य एष एतस्मिन्मण्ड-
ले, पुरुषोऽयमेव सोयं दक्षिणोऽक्षन्पुरुषः ॥ [उपस्थान
करना] शुक्रियं रुद्रस्य ॥ य उदगात्पुरस्तान्महतो
अर्णवाद्विभ्राजमानः सरिरस्य मध्ये । स मामृषभो रो-
हिताक्षः, सूर्यो विपश्चिन्मनसा पुनातु । यद्ब्रह्माऽत्वा-
दिष्म तन्मा मा हिंसीत्सूर्याय विभ्राजाय वै नमो
नमः ॥ (न्यास करना) अ नाभौ । उ हृदि । म
शिरसि ॥ भूः पादयो । भुवः हृदि । स्वः शिर-
सि ॥ ओंभूः अङ्गुष्ठाभ्यां नमः । भुवः तर्जनीभ्यां
नमः । स्वः मध्यमाभ्यां नमः । महः अनामिकाभ्यां
नमः । जनः कनिष्ठिकाभ्यां नमः । तपः सत्यं क-
रतलकरपृष्ठाभ्यां नमः ॥ भूः पादयोः । भुवः जा-
न्वोः । स्वः गुह्ये । महः नाभौ । जनः हृदि

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

तपः कण्ठे । सत्यं शिरसि ॥ ओंभूः हृदयाय नमः ।
भुवः शिरसे स्वाहा । स्वः शिखायै वषट् । महः
कवचाय हुँ । जनः नेत्राभ्यां वौषट् । तपः सत्यम-
ऽस्त्राय फट् ॥ तत्सवितुरङ्गुष्ठाभ्यां नमः । वरेण्यं त-
र्जनीभ्यां नमः । भर्गो देवस्य मध्यमाभ्यां नमः ।
धीमहि अनामिकाभ्यां नमः । धियो योनः कनिष्ठि-
काभ्यां नमः ॥ प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ॥
तत्पादयोः । सवितुर्जान्वोः । वरेण्यं कट्यां । भर्गो
नाभौ । देवस्य हृदये । धीमहि कण्ठे । धियो ना-
सिकायां । यश्चक्षुषे । नः ललाटे । प्रचोदयात्
शिरसि ॥ तत्सवितुर्हृदयाय नमः । वरेण्यं शिरसे
स्वाहा । भर्गो देवस्य शिखायै वषट् । धीमहि कव-
चाय हुँ । धियो योनः नेत्राभ्यां वौषट् । प्रचोदया-
दऽस्त्राय फट् ॥ ओंआपस्तनयोः । ज्योतिर्नेत्रयोः ।
रसो मुखे । अमृतं ललाटे । ब्रह्मभूर्भुवः स्वरों शि-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

रसि ॥ (मुद्रा करना) तत्समाय नमः । स संपुटाय

नमः । वि वितताय नमः । तुर्विस्तीर्णाय० । व द्विमुखाय० । रे त्रिमुखाय० । ण्य चतुर्मुखाय० । भं पंचमुखाय० । भ षण्मुखाय० । गों अधोमुखाय० । देव्यापकाञ्जलये० । व शकटाय० । स्य यमपाशाय० । धी ग्रन्थिकायै० । म संमुखोन्मुखाय० । हि विलम्बाय० । धी मुष्टिकायै० । यो मीनाय० । यो कूर्माय० । नः वराहाय० । प्र सिंहाक्रान्ताय० । चो महाक्रान्ताय० । द मुद्गराय० । यात्पल्लवाय० ॥ [प्राणायाम करके संकल्प छोडना] अस्यश्री महागायत्रीशापोद्धारमन्त्रस्य विश्वामित्र ऋषिः, विष्टारपंक्तिगायत्रं छन्दः, सविता देवता शापोद्धारे विनियोगः ॥ ॐब्रह्मणाग्निः संविधानो रक्षोहा बाधितामितः । अमीवायुस्ते गर्भं दुर्नामा योनिमाशये १० " ऋग्वेदे " । हिरण्यगर्भाः० १० " यजुर्वेदे " ॐ आवायव्य यावायव्या यान्यौर्वायायवः ॐहरोसि पादमान मे विद्धि १० " सामवेदे " सुभद्रा पावनी

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

सुधा गायत्री विश्वभेषजम् । विशापामेनां कृत्वा यथास्तं विपरीतन १० "अथर्ववेद०" तत्सवितुरिति मंत्रस्य विश्वामित्र ऋषिः । गायत्रं छंदः । सविता देवता । आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं नित्यकर्मनिमित्तं चतुर्वर्गसिद्ध्यर्थे जपे विनियोगः ॥ [महागायत्री का ध्यान करना] मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिन्दुनिबद्धरत्नमुकुटां, तत्त्वाऽऽत्मवर्णात्मिकाम् । गायत्रीं वरदाऽभयाऽङ्कुशकरां, शूलं कपालं गुणं शङ्खं चक्रमऽथाऽरविन्दुयुगलं हस्तैर्वहन्तीं भजे ॥ [प्रार्थना करना] ॐदुर्निवारभवध्वान्तध्वंसनैककृतेक्षणाम् । नौमि मोहविनाशाय भीतो ब्रह्मादिदैवताम् १ दुर्गतिं हर मे देवि बहुजन्मशतार्जिताम् । प्राप्य कल्पतरुच्छायां कथं सन्तप्यते जनैः ॥ पश्य मामाऽऽशु गायत्रि विभ्यतं स्निग्धचक्षुषा । न बालमऽबलं पुत्रं मुञ्चत्यग्रगमऽम्बिका २ ॥ एहि मां प्रणिपन्नेन देवि त्वं करं शुभम् । महामोहाक-

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

त्वं दीनमेहि मां स्पर्श नित्यशः ४ ॥ मातः प्रती
त्तते नाऽर्तो यत्तदाशु प्रसीद मे । हित्वाऽत्तसूत्रं सा
वित्रि निर्विघ्नं पश्य मा मिह ५ ॥ शृण्वतो नाऽ
न्यकृत्यं स्यात्तत्त्वं परहितं कुरु । ब्रह्मविष्णुहराद्यास्त्वा-
माऽऽश्रयन्ते सुरेश्वरि ६ ॥ आगच्छ वरदे देवि, त्र्य-
क्षरे ब्रह्मवादिनि । गायत्रि छन्दसां मातर्ब्रह्मयोने
नमोऽस्तु ते ३ ॥ [ मूलमंत्र का जप करना ] ॐ
कारं पूर्वमुच्चार्य व्याहृतीस्तदनन्तरम् । गायत्रीं प्रणवं
चान्ते जप एवमुदाहृतम् ॥ ॐभूर्भुवः स्वस्तत्सवितुर्व-
रेण्यं, भर्गो देवस्य धीमहि, धियो यो नः प्रचोद-
यादों १०८ ॥ ( प्राणायाम करके तर्पण करना )
दशभिर्जन्मचरितं, शतेन च पुरा कृतम् । त्रियुगो-
त्थं सहस्रेण, गायत्री हन्ति किल्विषम् ॥ देवा गातु
श्रोत्रियाः, । देवा गातुविदो, गातुं वित्वा गातुमित-
मनसस्पत इमं देवयज्ञं स्वाहा, वाचे स्वाहा वाते
धाः ॥ [दिशाओं को प्रणाम करना] [पूर्व को]

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri

ओंनमः प्राच्यै दिशे याश्च देवता, एतस्यां प्रतिवस-
न्ति, एताभ्यश्च वो नमः १ ।। [अग्निकोणको] नमो-
ऽवान्तरायै दिशे० (दक्षिण को) नमो दक्षिणायै (नै-
ऋत कोण को) नमोऽवान्तरायै [पश्चिम को] नमः
प्रतीच्यै [वायव्य कोण को] नमोऽवान्तरायै [उत्तर को]
नम उदीच्यै [ईशानकोण को] नमोऽवान्तरायै [ऊपर को]
नम ऊर्ध्वायै [नीचे को] नमो धरायै ।। [तर्पण करना]
नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओष-
धीभ्यः नमो वाचे नमो वाचस्पतये नमो विष्णवे बृ-
हते कृणोमि इत्येतासामेव देवतानां सार्ष्टिं सायुज्यं
सलोकतां सामीप्यमाप्नोति य एवं विद्वान् स्वाध्याय-
मधीते ।। ओं नमो देव्येभ्यः कण्ठोपवीती स्वाहा ऋ-
षिभ्यः अपसव्येन स्वधापितृभ्यः सव्येन आब्रह्मस्तम्ब-
पर्यन्तं ब्रह्माण्डं सचराचरं जगत्तृप्यतु २ ।।

इति सन्ध्योपासनविधिः

CC-0. Kashmir Research Institute, Srinagar. Digitized by eGangotri